# मन्त्रार्थदीपिका ।

श्रीमन्महामहोपाध्यायशत्रुघ्नशर्मकृता श्रीमद्वा
राणसीवास्तव्येन राजकीयप्रधानसंस्कृतपाठ-
शालाधीतविद्येन श्रीमिथिलामण्डलेश्वरतो
लब्धवैदुष्यप्रतिष्ठेन वेदविद्यालयाध्यापकेन
पाठकोपाह्वश्रीयुगलकिशोरशर्म्मणा संशोध्य
भारतजीवनाख्ययन्त्रालये द्वितीयवारं
संस्कृत्य मुद्रापयित्वा च
प्रकाशिता ।

काशी ।

भारतजीवन प्रेस में मुद्रित हुआ ।

सन् १८९१ ई० ।

प्रति पुस्तक मूल्यं मुद्राद्वयम् २)

महेश्वरशर्मा मुकाम-काशी-बांसी

जंगम वाडी

अथ शत्रुघ्नकृतमन्त्रार्थदीपिकायास्तत्कर्ममन्त्राणां

# सूचोपत्रम् ।

पृष्ठानि

॥ श्रीगणेशाय नमः ॥

# मन्त्रार्थदीपिका ।

श्रुत्वा तातपणं सुदारुणतरं कामाभिरामाऽऽकृति-
र्जानक्या निभृतातिकातरदृशा(१)साकूतमालोकितः।
श्रीरामः स पुनातु धूर्जटिधनुर्भङ्गेन यस्याभवत्
रोमाञ्चस्य मिषेण गुप्तहृदयानन्दादमन्दाङ्कुरः ॥ १ ॥

तरावालोलायां भयचकितगोपालतरुणी-
दृगन्तैरुन्मीलत्कुवलयदलश्रेणिसुभगैः ।
हठादापूर्णायां तपनतनयानीरनिवह-
भ्रमेण प्रक्षेप्तुं कृतकरपुटो रक्षतु हरिः ॥ २ ॥

बभूव राजन्यकुलावतंसः पुरा सुशर्मा किल रानसिंहः।
निहत्य यो भारतसंयुगेषु चकार भूमीधरभूमिरक्षाम्॥३॥

तदन्वये यो महनीयकीर्त्तिः
सुवीरचन्द्रः क्षितिपः किलासीत् ।
चकार यः संयुगयज्ञभूमौ
पशूनशेषानिव वैरिवीरान् ॥ ४ ॥

( १ ) निभृतोऽतिकातरदृशेति 'ख' पुस्तकपाठः ।

तस्मादसीमगुणसिन्धुरशेषबन्धु-
रासीत्समस्तजनगीतभुजप्रतापः ।
श्रीदेवकीतनयपादरतः प्रयाग-
चन्द्रः प्रजानयनरञ्जनपूर्णचन्द्रः ॥ ५ ॥

राजाश्रीरामचन्द्रः क्षितिपतितिलकः क्षोणिचक्रैकभूषा
तस्मादासीच्च दोषाकरइव जलधेः शोभमानः कलाभिः॥
येन क्षोणीधरेण क्षितिपतिनगरे स्थापिता धर्ममार्गा
विद्या किं वाऽनवद्याद्विजवरनिवहैः शिक्षितारक्षिताश्च

तेन श्रीधर्मचन्द्रः समजनि धरणीपालमूर्द्धन्यरत्नं
यत्नादाराधितश्रीपतिपदकमलध्यानधाराधुरीणः ।
यस्मिन्नायच्छमाने रणशिरसि धनुर्द्दण्डमुद्दण्डवीर्ये
प्रत्यर्थिक्षोणिपालाः क्षणमपि समरे नासितुं सङ्गमन्ते ॥

आदेशादथ राज्ञस्तस्य श्रीधर्मचन्द्रस्य ।
मन्त्रार्थदीपिकेयं क्रियते शत्रुघ्नशर्मणा सम्यक् ॥ ८ ॥

उवटे मन्त्रव्याख्या गुणविष्णौ (१) ब्राह्मणीयसर्वस्वे ।
वेदविलासिन्यामपि कौशलमौच्य तथापि मे सद्भिः॥९॥

(१) काश्मीर देशस्थवज्रट सुतोवटकृतशुक्लयजुःसंहिताभाष्ये । गुणविष्णुकृतसामवेदीयमन्त्रार्थे । ब्राह्मणसर्वस्वग्रन्थः प्रसिद्धः । भट्टदेवकृतव्याख्यायां च ।

पूर्वग्रन्थेषु या व्याख्या लिख्यते ऽत्रापि सा मया ।
किन्तु तेषु दुरूहं यत्तदत्रातिविशद्यते ॥ १० ॥
स्नानमन्त्रास्ततः सन्ध्यामन्त्रा देवार्चने तथा ।
श्राद्धमन्त्रास्तथा पश्चात् षडङ्गशतरुद्रियम् ॥ ११ ॥
वैश्वाह्निकादयो मन्त्रा व्याख्यायन्ते क्रमादिह ।
उपोद्घातप्रसङ्गाभ्यां केचिदन्तेऽपि कुत्रचित् ॥ १२ ॥
तत्रोपोद्घातप्रसङ्गाभ्यां प्रथमं वेदार्थज्ञानप्रशंसा ।
तत्र कूर्मपुराणे । न वेदपाठमात्रेण सन्तोषं कारयेद्गुरुः
पाठमात्रावसानस्तु पङ्के गौरिव सीदति ॥ १३ ॥
योऽधीत्य विधिवद्विप्रो वेदार्थं न विचारयेत् ।
स सान्वयः शूद्रसमः पात्रतां न प्रपद्यते ॥ १४ ॥
व्यासः । वेदस्याध्ययनं सर्वं धर्म्मशास्त्रस्य चापि यत् ।
अजानतोऽर्थं तत्सर्वं तुषाणां कण्डनं यथा ॥ १५ ॥
तथा । यथा पशुर्भारवाही न तस्य भजते फलम् ।
द्विजस्तथार्थाऽनभिज्ञो न वेदफलमश्नुते ॥ १६ ॥
पाठमात्ररतान्नित्यं द्विजातींस्त्वार्थवर्जितान् ।
पशूनिव च तान् प्राज्ञो वाङ्मात्रेणापि नार्च्चयेत् ॥ १७ ॥
श्रुतं तु केवलमपि समुद्धाराय कल्पते ।
योऽधीतेनार्थतत्त्वज्ञः तस्य तद्धारणा वृथा ॥ १८ ॥
भारवाही च भृतकः केवलं क्लेशभाग्भवेत् ।
तस्मादर्थपरिज्ञाने यत्नः कार्यो विजानता ॥ १९ ॥

ज्ञानं कर्म च संयुक्तं तदर्थं कथितं मया ।
अधीतं श्रुतसंयुक्तं तथा श्रेष्ठं न केवलम् ॥ २० ॥
अधीत्य यत्किञ्चिदपि वेदार्थाधिगमे रतः ।
स्वर्गलोकमवाप्नोति धर्मानुष्ठानविद्द्विजः ॥ २१ ॥
मनुः । वेदशास्त्रार्थतत्त्वज्ञो यत्र तत्राश्रमे वसन् ।
इहैव लोके तिष्ठन् स ब्रह्मलोकाय कल्पते ॥ २२ ॥
व्यासः । समुच्चितं स्तोकमपि श्रुताधीतं विशिष्यते ।
चतुर्णामपि वेदानां केवलाध्ययनाद् द्विजाः ॥ २३ ॥
अज्ञेभ्यो ग्रन्थिनः श्रेष्ठा ग्रन्थिभ्यो धारिणो वराः ।
धारिभ्यस्त्वार्थतत्त्वज्ञास्तेभ्यो ऽप्यध्यात्मचिन्तकाः ॥२४॥

अथ स्नानमन्त्रव्याख्या ।

उरुꣳ हि राजा वरुणश्चकार
सूर्य्याय पन्थामन्वेतवाऽउ ।
अपदे पादाप्रतिधातवेऽकरु-
तापवक्ता हृदयाविधश्चित् ॥ १ ॥

हि यस्माज्जलस्य राजा वरुणः सूर्याय सूर्यस्य पन्था पन्थानं उरु विस्तीर्णं चकार कृतवान् । तस्मात्तं पन्थानं अहमन्वेतवै अनुगच्छामीत्यर्थः उ पक्षान्तरे स एव वरुणस्तमेव पन्थानं अपदे आकाशे सूर्यस्य पादाः पादानां प्रतिधातवे अर्पणाय अक. कृत

वान् ॥ अविष्युः ॥ तस्य पदे, अप उत, अपि च, स एव वरुणः हृदयाविधश्चित् हृदयाविधः पिशुनस्यापि अपवक्ता नियामकः चिदप्यर्थे तथा जलस्य राजा पिशुनस्यापि नियामको वरुणः आकाशे सूर्यस्य रश्मीनामर्पणाय विस्तीर्णं पन्थानं कृतवान तं पन्थानमनुगच्छामीति याज्ञावाक्यार्थः। अत्र सूर्यायेति षष्ठ्यर्थे चतुर्थी, पन्थामिति पन्थानमित्यत्र नकारलोपः। छान्दसत्वात् सुपां सुपो भवन्ति, बहुषु बहुवचनमित्येताभ्याम् अन्वेतवै इण् गतावित्येतस्मात् अनुपूर्वात्कृत्यार्थे(१)तुमर्थे तवैकेन्केन्यत्वन इति तवै प्रत्यय। कृन्मे जन्त इति अव्ययत्वं, पादा इति षष्ठीबहुवचनस्थाने छान्दसत्वादाकारः (२) प्रतिधातव इति प्रतिपूर्वाद्धातेस्तुमर्थे तवेप्रत्यये रूपम्। अकइति करोतेर्लङ्स्थाने प्रथमैकवचने सिप् कर्मणि प्रत्ययः। बहुलं छन्दसीति बहुलवचनादिट् न भवति धातोर्गुणः रपरत्वं हल्ङ्यादिना विभक्तिलोपः रेफस्य विसर्गः। हृदयाविध इति हृदयमाविध्यतीति क्विप् (३) नहि वृतीति दीर्घः॥

मन्त्रः नमो व्वरुणायाभिष्ठितो
व्वरुणस्य- पाशं +॥ २ ॥

---

(१) अ॰ पा. अ॰३ पा॰४ सू.९ तुमर्थे सेसेनसे इत्यादिना कृत्यार्थे पूर्वोक्ताध्यायादिस्थेन १४ सू॰ च तवै प्रत्ययः।

(२) प्रतिधातवे इत्यत्र नवमसूत्रेण तवे प्रत्ययश्च।

(३) पा.अ॰६। सू॰११६ कात्यायनकृतप्रातिशाख्यतृतीयाध्यायस्थेन ९७ अश्वरश्मिसुमतीत्यादिना व्यधौ परे हृदयशब्दस्य दीर्घः।

योऽभिष्ठितो वरुणस्य पाशः । वरुणाय नमः अस्तु कुतः वरुणस्य जलरूपः पाशः ॥ अभिष्ठितः ॥ आक्रान्तो गतः, अयं वाक्यार्थः वरुणस्य जलरूपपाशक्रमेण या अप्रीतिर्जायते सा वरुणनमस्कारेणापनीयते तेन वरुणनमस्कारपूर्वकं जलावतरणं क्रियते इति ॥

ये ते शतं व्वरुण ये सहस्रं य्यज्ञियाः
पाशा वितता महान्तः ॥ ३ ॥

हे वरुण ते तव ये यज्ञियाः यज्ञसम्बन्धिनः शतं पाशाः सहस्रं वा वितताः । विस्तीर्णाः पाशाः ॥ किं भूता महान्तः उत्कृष्टाः ॥

तेभिर्न्नोऽअद्य सवितोत व्विष्णुर्व्विश्श्वे
मुञ्चन्तु मरुतः स्वर्क्काः ।

तेभिस्तेभ्यो अद्य नः अस्मान् सविता मुञ्चतु मोचयतु उत समुच्चये विष्णुश्च मोचयतु विश्वे विश्ववर्त्तिनो मरुतश्च सुष्ठु यथा स्यादेवं अर्काश्च मोचयन्तु ॥

सुमित्त्रिया नऽआपऽओषधयः सन्तु
दुर्मित्त्रियास्तस्मै सन्तु योऽस्मान्द्वेष्टि
यं च व्वयं द्विष्मः ॥ ४ ॥

आपः ओषधयश्च नः अस्माकं सुमित्रियाः साधु मित्रत्वेनावस्थिताः सन्तु दुर्मित्रिया इति ता एव तस्मै दुर्मित्रिया दुष्टमित्रत्वेनावस्थिताः सन्तु तस्मै कस्मै योऽस्मान्द्वेष्टि अर्थात् शत्रुः । यं च वयं द्विष्मः अर्थात् शत्रुमेव ॥

इदं विष्णुर्विचक्रमे त्रेधा नि दधे

पदम्। समूढ मस्य पांसुरे ॥ ५ ॥

इदं जगद्विष्णुर्विचक्रमे आक्रान्तवान् विशत्वात्सर्वप्राणिनोऽपि भूतेन्द्रियमनोऽन्तरेवभावेन विशति इति विष्णुः। यद्वा विष्ल्व्याप्तौ विष्णुर्व्यापकः किं च स त्रेधा पदं निदधे भूम्यन्तरिक्षस्वर्लोकेषु अग्निवायुसूर्यरूपेण त्रिधा पदं विहितवानित्यर्थः। किं च अस्यैव विष्णोरन्यत्पदान्तर विज्ञानमयानन्दमयमद्वैतमक्षरमित्येवं लक्षणं समूढं अन्तर्हितं अविज्ञातमिति यावत् अर्थात् अकृतात्मभिः पांसुलइति लुप्तोपममेतत्। तेन पांसुलइत्यत्र रलयोरैकत्र स्मरणात्। तथा च। यथा पांसुले प्रदेशे पांसुलमग्रे पिहितं अन्यद्द्रव्यान्तरं समूढं दर्शनायोग्यं भवतीति तात्पर्य्यं॥ तदुक्तम्॥ तद्विष्णोः परमंपदम् सदा पश्यन्ति सूरयः दिवीव चक्षुराततमिति॥

आपो ऽअस्मान्मातरः शुन्धयन्तु घृतेन

नो घृतप्व: पुनन्तु। विश्वꣳ

हि रिप्रं प्रवहन्ति देवीः ॥ ६ ॥

आपः उच्यन्ते या एता आपः जगतो निर्मात्रः ता अस्मान् शुंधयन्तु शोधयन्तु किं च नोऽस्मान् घृतेन पुनन्तु यज्ञजलवीर्येण पवित्रानकुर्वन्तु किं भूताः आपः घृतप्वः घृतेन पावयन्तीति घृतप्वः घृतं हि अपां परमं तेजः पवित्रं च तथा च श्रुतिः। "तद्वै सुपूतं यं

घृतेन पुनन्तीति" (१) स्रुवन्ति प्राणाघृतप्राय । इति मेध्यानीति गौतमः । स्तुतिपूर्वं हि यच्च क्रियतइति स्तौति विश्वमिति हि यस्माद्विश्वं सर्वं रिप्रं पापं देवोर्देव्यः भवत्यः प्रवहंति मार्जयन्ति (२) रिपो रिप्रमिति पापनामनी । इत्युवटः यस्मात्स्वभावतएव सर्वं रिप्रं पापं प्रकर्षेण नाशयन्ति भवत्यः तस्मादिदमपि पापं नाशयत इत्यर्थः ॥

उदिदाभ्यः शुचिरापूतऽएमि इति ॥ ७ ॥

उदित्यनेन व्यवहितेन एमीत्यत्रान्वयः । तथा च आभ्य अन्यः शुचिः सन् आपूतश्च आसमन्ताद्भावेन पूतश्च सन् उदेमि उद्गच्छामि इ ऋब्दोऽनर्थकः । मानस्तोकइत्यस्य व्याख्यानं शतरुद्रियव्याख्याने द्रष्टव्यं ॥ ८ ॥

इमं मे वरुण श्रुधी हवमद्या च मृडय ॥

त्वामवस्युराचके ॥ ९ ॥

(१) शतपथ ब्राह्मणे ३ काण्डेऽध्वरे १ प्रपाठके १ अध्यायस्य २ ब्रा· ११ कण्डिका ॥

(२) अत्र संहिताभाष्यकारेणोवटेन पापार्थे रिपो रिप्रमिति पदद्वयं कथितं परन्तु यास्काचार्यकृतपञ्चाध्यायात्मके निघण्टौ एकविंशतिपृथ्वीनामान्तर्गतत्रयोदशमनाम तथापि रिफधातुरत्र हिंसार्थः रिफकत्थनयुद्धनिन्दाहिंसादानेषु तुदादिः परस्मैपदी क्विपि कृते फकारस्य पकारो 'पा· अ·३ पा·१ सू·५८ व्यत्ययो बहुलम्' इति व्यत्ययेन रिपपदस्यैवार्थो रिप्रशब्दस्यापि छान्दसत्वात् ॥

हे वरुण अद्य मे मम हवं आह्वानं श्रुधि शृणु (१) श्रुधीति संहितायां दीर्घः अस्मांश्च आमृडय आसुखय मृडसुखने कालान्तरं नापेक्षणीयमित्यर्थः किं कारणं यतस्त्वामहमाचके कामये आचक इति कान्तिकर्म्म कथंभूतः कामये अवस्युरात्मनो धनं रक्षणं वा इच्छन् अव रक्षणं धनं च ॥

तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते
यजमानो हविर्भिः अहेडमानो वरुणेह
बोद्ध्युरुशꣳस मा नऽ आयुः प्रमोषीः ॥ १० ॥

तदिति यदर्थो ज्ञेयः । अग्रे तत् श्रवणात् ; ऋत्विग्वदति अह ब्रह्मणा त्रयीलक्षणेन वन्दमानः । स्तुवनसन् । यत्प्रयोजनार्थं त्वां यामि उपसर्प्यामि तदेवायं यजमानः आशास्ते उपस्थितैः हविर्भिः । अतः हे वरुण अहेडमानः अक्रुधः । इह कर्मणि वर्त्तमानः न अस्माकं प्रयोजनं यज्ञसमाप्तिलक्षणं बोधि बुध्यस्व बुद्ध्वा च हे उरुशंस बहुसंस्तव न आयुः मा प्रमोषीः मा खण्डय ॥

त्वन्नो ऽअग्ने वरुणस्य विद्वान्देवस्य
हेडो ऽअवयासिसीष्ठाः । यजिष्ठो
वह्निर्तमः शोशुचानो विश्वा
द्वेषाꣳसि प्रमुमुग्ध्यस्मत् ॥ ११ ॥

(१) पा॰ अ॰ ६ पा॰ ४ सू॰ ॰२ श्रुशृणुपॄकृवृभ्यश्छन्दसि । इति हेर्धिः । पा॰ अ॰ ६ । पा॰ ३ सू॰ १३४ द्व्यचोऽतस्तिङः इति दीर्घः । नि. अ. २ । ६ । ११ । कान्तिकर्म । प्रा. अ. ३ सू. ११३ अद्य तरं हकारेति दीर्घः तेन अद्या च रूप सिद्धिः ।

हे अग्ने न अस्मान् प्रति वरुणस्य देवस्य हेडं क्रोधं अवयासिसीष्टाः अवगमय अपनय दूरीकुरु कथं भूतः त्वं विद्वान् जानन् क्रोधमिति शेषः। अवयासिसीष्टाइति (१) यसुप्रयत्ने इत्यस्य रूपं तस्यावपूर्वस्य लिङ् यस्माच्चत्वं यजिष्ठः यष्टुतमः यागातिशय उत्तमः हविषां प्रापकोसीत्याशंसा वह्नितमो बोध्यतमः अर्थाद्धविषा शोशुचानः उत्तरोत्तरं देदीप्यमानश्च भवसि तस्मात्प्रार्थये अस्मत् अस्मत्तः विश्वानि सर्वाणि द्वेषांसि दौर्भाग्यानि प्रमुमुग्धि प्रमोचय। हे अग्ने त्वमस्मान् जानासि अतो ऽस्माकमस्मिन्कर्मणि प्रमादजनितवैगुण्यकृतवारुणं क्रोधमपनय। अस्माकं दौर्भाग्यानि मोचयेति प्रार्थनावाक्यार्थः। हेड इति हिडि गत्यनादरयोर्धातोः इत्यस्य प्रयोगः। शोशुचानइति द्वितीयैकवचने प्रथमैकवचनम्।

सत्त्वन्नो ऽअग्ने ऽवमो भवोतो नेदिष्ठो ऽ
अस्या ऽउषसो व्युष्टौ॥ अवयक्ष्व नो व्वरुणꣳ
रराणो वीहि मृडीकꣳ सुहवो न ऽएधि॥१२॥

(१) यामीति याच्ञा कर्मसु पठितः नि० अ० ३ यामीति कर्मणां जन विंशतिनामान्तर्गतं द्वितीयं नाम अत्रापि च आकारलो पः॥बोधि वुध्यस्व अनुजानीहि। हुझल्भ्योर्हेर्धिः पा० अ०३ पा० ४ सू० ८८ वा छन्दसीति हेरपित्वाद्गुणः धलोपश्छान्दसः। प्रमोषीः मा चोरय मुषस्तेये लुङ् नमाङ्योगइति अडभावः पूर्णमायुश्च देहीत्यर्थः।

हे अग्ने स त्वं एवं प्रार्थ्यमानो न अस्माकं अवमो भव अवितृतमो भव पालयितृतमो भव ऊती ऊत्या तर्पणेन गत्या वा नेदिष्ठश्च निकटतमोभव कस्मिन्समये प्रभातस्य अस्याउषसो व्युष्टौ समाप्तौ विच्छेदावच्छिन्ने काले अस्मिन्नेवाहनीत्यर्थाभिप्रायः ततः अवयक्ष्व अवगत्य न अस्माकं वरुणं यज रराणः रममाणः सन् यद्वा रादाने हविरददानः ततो वीहि भक्षय अर्थात्पुरोडाशं किं भूतं मृडीकं सुखकरम् ततो न अस्माकं सुहव. स्वाह्वानः एधि आगच्छ भव ।

माऽपो मौषधीर्हिᳬंसीर्धाम्नोधाम्नो राजँस्ततो व्वरुण नो मुञ्च ॥ यदाहुरघ्न्याऽइति व्वरुणेति शपामहे ततो व्वरुण नो मुञ्च ॥ १३ ॥

हे वरुण ओषधीः मा हिंसीः आपश्च मा हिंसीः किं च हे राजन् वरुण ततो धाम्नः पापसमन्वितात्स्थानात् न अस्मान्मुञ्च मोचय यतो यतो बिभिमइत्यभिप्रायः यदाहुरिति किं च हे वरुण ततस्तस्मादेनसः नोऽस्मान्मुञ्च मोचय अर्थाद्गोबधात् यत् यतः गावः अघ्न्याः अहिंस्या इत्याहुः अर्थाद्वेदस्मृतिलोकवाक्यानि वयं-

(१) यसुप्रयत्ने अव पूर्वस्य णिजन्तस्यास्याशीर्लिङि रूपम् । विश्वानीत्यत्र निकारलोपः । प्रा॰ अ॰ ३ सू॰ १७ निशब्दो बहुलमित्यनेन सूत्रेण ॥ प्रमुग्धि प्रमुञ्च दूरीकुरु सुचेर्व्यत्ययेन शपः श्लुः ॥ यजिष्ठः अतिशयेन यष्टा तुरिष्ठेमेयःस्विति तृचो लोपः । शोशुचान शोचतेर्यङ्लुगन्ताच्छानच् प्रत्ययः ।

च इति अनेन प्रकारेण ताः शपामहे हिंसामः अहिंस्याः पूजनीयाश्च हिंसामेति तद्धिंसाजनितं पापं नाशयेति वाक्यार्थः ॥

उदुत्तमं वरुण पाशमस्मदवाधमं
विमध्यमं श्रथाय ॥ अथा वयमादित्यव्रते
तवानागसो ऽदितये स्याम ॥ १४ ॥

उत् इत्ययमुपसर्गः श्रथायेत्यत्र सम्बध्यते हे वरुण अस्मत् अस्मत्तः उत्तमं ऊर्द्धस्थितं तावत । पाशमुच्छ्रथाय श्लथीकृत्योर्द्ध्वं नय अधमं च पाशं अवाचीनं अवश्लथय मध्यमं च पाशं विश्लथय तथैव कृते सति हे आदित्य अदितेः पुत्र तव व्रते कर्मणि वर्त्तमानाः अनागसः अनपराधा वयं अदितये अदीनतायै स्याम भवेम ॥

मुञ्चन्तु मा शपथ्यादथो वरुण्यादुत ॥ अथो
यमस्य पड्वीशात्सर्वस्माद्देव किल्बिषात्॥ १५॥

आपः मा मां शपथ्यात् शपथनिमित्तात् । किल्विषात् मुञ्चन्तु मोचयन्तु अथोऽपि च वरुण्यात् वरुणसम्बन्धिनः पाशात् मुञ्चन्तु अथो अनन्तरं उत अपि च यमस्य यमसम्बन्धिनः । पड्वीशात् बन्धनात् मुञ्चन्तु सन्दानं बन्धनं सर्व्वन्तं पड्वीशमिति दृश्यतइत्युवटः किं च सर्वस्माद्देवसम्बन्धिनः किल्विषात् पापात् मुञ्चन्तु ।

अवभृथ निचुम्पुण निचेरुरसि निचुम्पुणः ।
अव देवैर्देवकृतमेनो यासिषमव मर्त्यैर्मर्त्य-
कृतं पुरुराव्णो देव रिषस्पाहि ॥ १६ ॥

हे अवभृथ यज्ञ यतस्त्वं निचुंपुण नीचैः क्वणनोऽसि निचेरुरसि नीचैश्चरणोऽसि तं त्वां प्राप्यैव देवकृतं एनः अवयासिषं अपनीत वान् देवविषये कृतं देवकृतं कैः सह किं च मर्त्यैर्मनुष्यैः सह अर्थात् ऋत्विग्भिः सह मर्त्यकृतं पापं अवयासिषं मर्त्यविषये कृतं मर्त्यकृतं अतस्त्वं हे अवभृथ देव रिषः पाहि देवसम्बन्धिनः रिषः वधात् पापात् पाहि रक्ष रिषतिर्हिंसार्थः क्विबन्तः कथं भूताद्व- धात् पुरुरावणः रादाने पुरुशब्दो बह्वर्थः बहुकामोपभोगसन्तान- दातुः अर्थात्संसारलक्षणाद्वधात् ॥

यद्वा रुशब्दे रुवन्ति प्राणिनोऽस्मिन् संसार्यमाणाइति पुरु- रावा तस्मात पुरुरावणः संसारादित्यर्थः

इदमापः प्रवहतावद्यं च मलं च यत् ॥
यच्चाभिदुद्रोहानृतं यच्च शेपेऽअभीरुणम्। आपो
मा तस्मादेनसः पवमानश्च मुञ्चन्तु ॥ १७ ॥

हे आपः इदं पशुसम्बन्धि पापं प्रवहत अपनयत किं च यत् अवद्यं अवदनीयं अभिशापादि तत्प्रवहत यच्च मलं शारीरसंलग्नं तत्प्रवहत यच्चानृतं मिथ्यैवं अभिदुद्रोह दुग्धवानस्मि (१) अर्थात्प- रिचरणीयं सेवनीयं यच्चाभीरुणं अनपराधिनं अभिशेपेऽभिशप्तवा- नस्मि अपराधी हि बिभेति । अतो भीरुशब्देनापराध्युच्यते यद्वा ऽभिलुनाति छिनत्ति मर्माणि यदुच्चरितं सत्तदभीरुणं तस्मादेनसः आपः पृथक्कुर्वन्तु पवमानश्च सोमो वायुर्वा मुञ्चन्तु मोचयन्तु ॥

(१) दुद्रुहवान् इति 'ख' पुस्तकपाठः।

हविष्मतीरिमा ऽआपो हविष्मा २॥ऽ आ विवासति ॥ हविष्मान्देवो ऽ अध्वरो हविष्मा २॥ऽ अस्तु सूर्य्यः ॥ १८ ॥

इमा आपः हविष्मतीः हविषा संयुक्ता हविष्मान्हविषा संयुक्तो अर्थाद्यजमानः आविवासति परिचरति आविवासति । पारिचर्य्यायां वर्त्तते देवो अध्वरो यज्ञो हविष्मानस्तु आभिरद्भिरिति शेषः सूर्योऽपि हविष्मानस्तु अतिरिक्तमेवै गृह्णाति यएष तपति ।

इत्यभिप्रायः ।

देवी राषोऽ अपान्नपाद्यो वऽऊर्मिर्ह- विष्यऽइन्द्रियावान्मदिन्तमः ॥

४
तं देवेभ्यो देवत्रा दत्त शुक्रपेभ्यो येषां भागस्थ स्वाहा ॥ १९ ॥

हे आपः देव्यः अपान्नपात्सञ्ज्ञा वः युष्माकं यऊर्मिरन्तर्जलसङ्घातः कल्लोलस्तं शुक्रपेभ्यो देवेभ्यः दत्त प्रयच्छत शुक्रशब्दउपलक्षणार्थं शुक्रसोमादिग्रहपतिभ्यो देवेभ्यः इत्यर्थः ते के येषां देवानां यूयं यज्ञाङ्गभागः स्थ अंशः भवथ कल्लोलः किंभूतः हविष्यः यज्ञियः पुनः किं भूतः इन्द्रियावान् इन्द्रियशब्देन वीर्यवानित्यर्थः छान्दसत्वाद्दीर्घत्वं मदिन्तमः मदयितृतमः पुनः कि भूत. देवत्रा देवान्प्रतियायी देवमनुष्येत्यादिना त्राप्रत्ययः ।

कार्षिरसि समुद्रस्य त्वा क्षित्याऽउन्नयामि । समापो ऽअद्भिरग्मत समोषधीभिरोषधीः॥२०॥

आपः त्वं कार्षिरसि आकृष्टमसि कृषविलेखने देवताया भक्तिरिति शेषः त्वा त्वां समुद्रस्य जलस्य अक्षित्यै अनुपक्षीणतायै उन्नयामि तद्गृह्णामि आपो वै समुद्रइति श्रुतिः किं च हे आपः अद्भिः समग्मत संगच्छत ओषधीभिर्व्रीहियवादिभिः सह ओषधीर्मुद्गमसूरा दिकाः समग्मत तेन ताः सम्यगुत्पद्यन्ते अपां कारणत्वादोषधीनामिति भावः ॥

अपो देवा मधुमतीरगृभ्णन्नूर्ज्जस्वती
राजस्वश्चितानाः। याभिर्मित्रावरुणावभ्यषिञ्चन्याभिरिन्द्रमनयन्नत्यरातीः ॥ २१ ॥

या आपः देवा अगृभ्णन्नगृह्णन् ताः गृह्णामीति शेषः किं भूताः आपः मधुमतीः स्वादुमतीः पुनः किं भूता ऊर्ज्जस्वतीः अन्नवतीः ऊर्ज्जमन्नं पुनः किं भूताः राजस्वः राजन्यं याः सुवन्ते जनयन्ति ता राजस्वः पुनः किं भूताः चितानाः चेतयमानाः परिदृष्टिकारिणीः किं च याभिर्मित्रावरुणौ अभ्यषिञ्चन् अभिषिक्तवन्तः देवाइत्यनुवृत्तिः याभिर्देवा अत्यरातीः अरातीः शत्रुसेनाः अतीत्य इन्द्रं अनयन् आनीतवन्तः ॥

द्रुपदादिवेति ॥ २२ ॥

सन्ध्याप्रकरणे लेखनीयं ॥

शन्नो देवीरिति ॥ २३ ॥

आह्ने ऽन्वेष्यम् ।

अपाꣳ रसमुद्वयसꣳ सूर्य्ये सन्तꣳ समाहितम्। अपाꣳ रसस्य यो रसस्तं वो गृह्णाम्युत्तमम् ॥ २४ ॥

अपां यो रसः सारः वायुः । श्रुतिरेष च अपां रसो योऽयंपवतइति, त गृह्णामि किं भूतं रसं उद्वयसं उन्नत वयोक्तं यस्मात्तत् उद्वयसं सूर्ये समाहितं सन्तं किं च अपां रसस्य वायोः यो रसः स प्रजापतिः हे आपः वः युष्माकं उत्तमं मयि गृह्णामि उत्तमं उत्कृष्टम् ।

अपो देवीरुप सृज मधुमतीरयक्ष्माय
प्रजाभ्यः । तासामास्थानादुज्जिहतामोषधयः सुपिप्पलाः ॥ २५ ॥

प्रक्रमादग्निरुच्यते हे अग्ने या देवीः अपः आपः उपसृजसि विक्षिपसि अर्थाद्वृष्टिरूपाः तासां भूमिगतानां आस्थानात्समीपात् ओषधयः उज्जिहतां उद्गच्छन्तु किं भूताः ओषधयः सुपिप्पलाः सुफलाः पिप्पलं फलमुच्यते । आपः किं भूताः मधुमती रसवतोः किमर्थं विसृजसि प्रजाभ्यः प्रजानां अयक्ष्माय अयक्ष्मत्वाय भावप्रत्ययमलोपः यक्ष्मा व्याधिः ॥

पुनन्तु मा पितरः सोम्यासः पुनन्तु
मा पितामहाः पुनन्तु प्रपितामहाः
पवित्रेण शतायुषा ॥ २६ ॥
पुनन्तु मा पितामहाः पुनन्तु प्रपितामहाः
पवित्रेण शतायुषा विश्वमायुर्व्यश्नवै ॥ २७ ॥

मा मां पितरः पुनन्तु पवित्रं कुर्वन्तु किं भूताः सोम्यासः सोमसम्पादिनः किं च पितामहाः पुनन्तु प्रपितामहाश्च केन पवित्रेण किं भूतेन शतायुषा शतं आयुर्यस्मात्तेन यद्वा कारणे कार्योपचारात्पवित्रमेव शतायुः । पुनन्तु मा पितामहाइत्यस्यार्थः तथा मा मां पितामहाः पुनन्तु प्रपितामहाश्च पुनन्तु आदरार्थोऽयमभ्यासः विशेषार्थो वा तथा कथं यथा विश्वं सर्वं आयुः अहं व्यश्नवै व्याप्नुयां प्राप्नुयामित्यर्थः ॥

अग्न॒ऽआयू॑ꣳषि पवस॒ऽआसुवो॒र्ज्ज॒मिषं॑
च नः ॥ आ॒रे बा॑धस्व दु॒च्छुना॑म् ॥ २७ ॥

हे अग्ने यतस्त्वं स्वभावतएव आयूꣳषि पवसे आयुः प्रापकानि कर्माणि चेष्टयसे अतः प्रार्थये ऊर्ज्जं दध्याद्युपसेचनं इषं च व्रीह्यादि नः अस्माकं आसुव अनुजानीहि एतद्धि जीवनहेतुरित्यभिप्रायः, किं च आरे दूरएवावस्थित सन्तमुच्छुनां बाधस्व पीडितं कुरु शुनां चात्र दुर्जनप्रभृतयो लक्ष्यन्ते तैरहितः पुरुषः परमायुः प्राप्नोतीत्यर्थः ॥

पुन॑न्तु मा देवज॒नाः पु॒न॒न्तु मन॑सा
धियः॑ ॥ पु॒न॒न्तु विश्वा॑ भू॒तानि॒
जात॑वेदः पु॒नी॒हि मा॑ ॥ २८ ॥

देवजना देवानुगामिनो जनाः मा मां पुनन्तु मनसा युक्ता धियो बुद्धयः पुनन्तु कर्माणि वा किं च विश्वानि सर्वाणि भूतानि च पुनन्तु हे जातवेदः अग्ने त्वमपि मा मां पुनीहि ॥

प॒वित्रे॑ण पुनीहि मा शु॒क्रेण॑ देव॒ दीद्य॑त् ।
अग्ने॒ क्रत्वा॒ क्रतूँ॒ (१) रनु॑ ॥ २९ ॥

हे अग्ने देव पवित्रेण किं भूतेन शुक्रेण शुद्धे न त्वं मा मां पुनीहि किं भूतस्त्वं अतिदिद्यतीति दीद्यत् दीप्यमानः किं च हे देव अग्ने क्रत्वा कर्माणि च तांस्तान् क्रतून यज्ञान् अनु क्रतौ क्रतौ तं प्रसारितं वर्त्तते तेन पवित्रेण मा मां पुनीहि ॥

यत्ते॑ प॒वित्र॑म॒र्चिष्यग्ने॒ वित॑तमन्त॒रा ।
ब्र॒ह्म तेन॑ पुनातु मा ॥ ३० ॥

हे अग्ने ते तव यच्चार्चिर्ज्वाला तस्यामर्चिषि अन्तरा मध्ये यत्पवित्रं कर्म यज्ञे विततं प्रसारितं वर्त्तते तेन पवित्रेण पुनातु ब्रह्मत्रयीलक्षणंपरं मां पुनातु अग्न्यनुज्ञानेनेति शेषः ॥

पव॑मान॒ः सो॑ऽअ॒द्य नः॑ प॒वित्रे॑ण
विच॑र्षणि॒ः॥ यः॑ पोता॒ स पु॑नातु मा ॥ ३१ ॥

स एव पवमानः सोमः अद्यास्मिन्नहनि पवित्रेण पुनातु किं भूतः पवमानः विचर्षणिर्द्रष्टा ज्ञाताज्ञातप्रत्यवेक्षकइत्यर्थः यस्य स्व-भावतः पोता रक्षको वायुः स मां पुनातु ॥

उ॒भाभ्यां देव सवितः॒ प॒वित्रे॑ण स॒वेन॑
च ॥ मां पु॑नीहि वि॒श्वतः॑ ॥ ३२ ॥

(१) यत्र यत्र यकारस्याधो भागे विन्दुरस्ति तत्र तत्र चव-र्गीयजकारसदृशोच्चारणमित्युक्तं कात्यायनप्रणीतप्रतिज्ञापरिशिष्टा-ख्यसूत्रे, इति सर्वत्र बोध्यम् ॥

हे सवितर्देव उभाभ्यां विश्वतः सर्वतः मां पुनीहि काभ्यां च पवित्रेण सवेन च मां पुनीहि, सवेन अनुज्ञया ।

वैश्वदेवी पुनती देव्यागाद्यस्यामिमा बह्व्यस्तन्वो वीतपृष्ठाः ॥ तया मदन्तः सधमादेषु वयं स्याम पतयो रयीणाम् ॥३३॥

वैश्वदेवी सुराकुम्भी प्रक्रमात् पुनती पावनं कुर्वाणा आऽगात् आगता यस्यां इमा बह्व्यो देव्यो धारास्तन्वः शरीरं किंभूता धारा वीतपृष्ठाः कान्तशरीराः काम्यन्ते हि सुराधारा तया मदन्तः मोदमाना वयं सधमादेषु सहमादनेषु रयीणां धनानां पतयः स्याम भवेम 'सधमादस्तयोश्छन्दसीति सहस्य सधादेशः ॥

चित्पतिर्मा पुनातु वाक्पतिर्मा पुनातु देवो मा सविता पुनात्वच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः ॥ तस्य ते पवित्रपते पवित्रपूतस्य यत्कामः पुने तच्छकेयम ॥ ३४ ॥

चित्तपतिर्ज्ञानपतिः आत्मा मनो वा मा मां पुनातु पवित्रं करोतु अथवा 'प्रजापतिर्वै चित्पतिरिति श्रुतिः' वाक्पतिर्बृहस्पतिश्च मां पुनातु सविता देवश्च मां पुनातु केन अच्छिद्रेण अनुपहतेन पवित्रेण कुशेन सूर्यस्य रश्मिभिश्च हे पवित्रपते पवित्राणां पते जलेन तेन हतस्य न केवलं कुशेन किन्तु सूर्यस्य रश्मिभिः तस्य पवित्रपूतस्य मम यजमानस्य तव प्रसवे आज्ञायां वर्तमानस्य हे

प॒वित्रे॑ण पुनी॒हि मा॑ शु॒क्रेण॑ देव॒ दीद्य॑त् ।
अग्ने॒ क्रत्वा॒ क्रतूँ॒ (१) रनु॑ ॥ २९ ॥

हे अग्ने देव पवित्रेण किं भूतेन शुक्रेण शुद्धेन त्वं मा मां पुनीहि किं भूतस्त्वं अतिदिद्यतीति दीद्यत् दीप्यमानः किं च हे देव अग्ने क्रत्वा कर्माणि च तांस्तान् क्रतून यज्ञान् अनु क्रतौ क्रतौ तं प्रसारितं वर्त्तते तेन पवित्रेण मा मां पुनीहि ॥

यत्ते॑ प॒वित्र॑म॒र्चिष्यग्ने॒ वित॑तमन्त॒रा ।
ब्र॒ह्म तेन॑ पुनातु मा ॥ ३० ॥

हे अग्ने ते तव यच्चार्चिर्ज्वाला तस्यामर्चिषि अन्तरा मध्ये यत्पवित्रं कर्म यज्ञे विततं प्रसारितं वर्त्तते तेन पवित्रेण पुनातु ब्रह्मत्रयीलक्षणंपरं मां पुनातु अग्न्यनुज्ञानेनेति शेषः ॥

पव॑मान॒ः सोऽअ॒द्य नः॑ प॒वित्रे॑ण॒
विच॑र्षणि॒ः ॥ यः पोता॒ स पु॑नातु मा ॥ ३१ ॥

स एव पवमानः सोमः अद्यास्मिन्नहनि पवित्रेण पुनातु किं भूतः पवमानः विचर्षणिर्द्रष्टा कृताकृतप्रत्यवेक्षकइत्यर्थः यश्च स्वभावतः पोता रक्षको वायुः स मां पुनातु ॥

उ॒भाभ्यां देव सवितः प॒वित्रे॑ण स॒वेन॑
च ॥ मां पु॑नीहि वि॒श्वत॑ः ॥ ३२ ॥

(१) यत्र यत्र यकारस्याधो भागे विन्दुरस्ति तत्र तत्र चवर्गीयजकारसदृशोच्चारणमित्युक्तं कात्यायनप्रणीतप्रतिज्ञापरिशिष्टाख्यसूत्रे, इति सर्वत्र बोध्यम् ॥

हे सवितर्देव उभाभ्यां विश्वतः सर्वतः मां पुनीहि काभ्यां च पवित्रेण सवेन च मां पुनीहि, सवेन अनुज्ञया ॥

वैश्वदेवी पुनती देव्यागाद्यस्यामिमा बह्व्यस्तन्वो वीतपृष्ठाः ॥ तया मदन्तः सधमादेषु वयꣳ स्याम पतयो रयीणाम् ॥३३॥

वैश्वदेवी सुराकुम्भी प्रक्रमात् पुनती पावनं कुर्वाणा आऽगात् आगता यस्यां इमा बह्व्यो देव्यो धारास्तन्वः शरीरं किंभूता धारा वीतपृष्ठाः काम्यशरीराः काम्यन्ते हि सुराधारा तया मदन्तः मोदमाना वयं सधमादेषु सहमादनेषु रयीणां धनानां पतयः स्याम भवेम "सधमादस्थयोश्छन्दसीति सहस्य सधादेशः ॥

चित्पतिर्मा पुनातु वाक्पतिर्मा पुनातु देवो मा सविता पुनात्वच्छिद्रेण पवित्रेण सूर्य्यस्य रश्मिभिः ॥ तस्य ते पवित्रपते पवित्रपूतस्य यत्कामः पुने तच्छकेयम् ॥ ३४ ॥

चित्पतिर्ज्ञानपतिः आत्मा मनो वा मा मां पुनातु पवित्रं करोतु अथवा 'प्रजापतिर्वै चित्पतिरिति श्रुतिः' 'वाक्पतिर्बृहस्पतिश्च मां पुनातु सविता देवश्च मां पुनातु केन अच्छिद्रेण अनुपहतेन पवित्रेण कुशेन सूर्यस्य रश्मिभिश्च हे पवित्रपते पवित्राणां पते जलेन तेन त्वमस्य न केवलं कुशेन किन्तु सूर्यस्य रश्मिभिः तस्य पवित्रपूतस्य मम यजमानस्य तव प्रसवे आज्ञायां वर्त्तमानस्य हे

सवितः । एतद्भवतु किं यदभिलषितं यत्कामः अहं आत्मानं पुनीं पावयामि तच्छ्रेयं मनुकुर्यां यन्नस्यान्तं गच्छामीत्यभिप्रायः ॥

आऽयं गौः पृश्निरक्रमीदसदन्मातरं पुरः । पितरं च प्रयन्त्स्वः ॥ ३५ ॥

अयमग्निः अक्रमीत ऐश्वर्य्येणाक्रान्तवान् जगदिति शेषः, किं भूतः गौः गन्ता तासु तासु क्रियास्विति शेषः पुनः किं भूतः पृश्निः नाना रूपः असदन् मातरं पुरः योऽग्निराप्रातरादित्यरूपेण इमां मातरं पृथिवीं पुर पुरस्तात्प्राच्यां दिशि असदन् आसीदिति अर्थात् इमं लोकं अग्निरूपेणानुगृह्य किं च पितरं च प्रयन्त्स्वः पितरं द्युलोकं ब्रह्मलोकं वा प्रयन गच्छन सीदतीत्यनुषज्यते स्वः आदित्यः । इति कातीयस्नानमन्त्रव्याख्या समाप्ता । अथ सन्ध्या मन्त्रव्याख्या । ओंऋतं चेत्यादि ।

ऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायत ततो रात्र्यजायत, ततः समुद्रोऽ अर्णवः समुद्रादर्णवादधिसँवत्सरो अजायत, अहोरात्राणि विदधद्विश्वस्य मिषतो वशी सूर्य्या चन्द्रमसौ धाता यथा पूर्वमकल्पयत्, दिवं च पृथिवीं चान्तरिक्षमथो स्वः ॥

अयं ऋग्वेदीयो मन्त्रः, अपरश्च तैत्तिरीयः तत्र रात्रिरजायतेति पाठः समुद्रोऽर्णव इति च अकल्पयद्दिवमिति च संहितं स च मन्त्रो माध्यन्दिनीयैर्न पठनीयः याज्ञवल्क्योक्तीर्णत्वात् । ऋतं

सत्यमिति च ब्रह्मणो नाम तथा च श्रुतिश्च । ऋतमेकाक्षरं ब्रह्म. सत्यं ज्ञानमनन्तं ब्रह्मेति । स्मृतिश्च ऋतमे काक्षरं ब्रह्मेति । तत्रातिष्ठदित्यध्याहार्य्यमनेनायमर्थः । ऋतं च सत्यं चातिष्ठदिति शेषः । अर्थात्सृष्टिपूर्वकाले तथा च तदानीं केवलं ब्रह्मैवासीदित्यर्थः । ततस्तदनन्तर प्रलयावस्थायामेव रात्रोः अजायत रात्रिरासीत् । रात्रिशब्देनान्धकार उच्यते तथा च सकलमन्धकारमयमासीदित्यर्थः । तेजोऽभावस्यैवान्धकारत्वात् । रात्रेश्चन्द्राधीनत्वेन अन्हः सूर्याधीनत्वेन च तयोः तदानीमसम्भवाच्चेति भावः । तथा च स्मृतिः, आसीदिदन्तमोभूतमविज्ञातमलक्षणमिति । ततस्तदनन्तरं प्रलयावसानसृष्ट्यारम्भसमये तपसः अद्दष्टात् समुद्रो अजायत बभूव तपसः किं भूतात् अभीद्धात् अभिसर्वतो भावेन ईद्धात् दीप्तात् । सर्वतो लब्धवृत्तेरित्यर्थः समुद्र किं भूतः अर्णवः अर्णः पानीयं तदस्यास्तीति अर्णवः पानीयमयः समुद्रः सञ्जातइत्यर्थः प्रथमतः सकलसंसारसृष्टिनिमित्तं जलराशिरुत्पन्नइत्यभिप्रायः । तथा च स्मृतिः अपएव ससर्जादौ तासु वीर्यमथादधदिति । ततस्तदनन्तरं अर्णवात्समुद्रादधि पश्चात् धाता अजायत धाता किं भूतः मिषतोऽप्रकटी भवतो विश्वस्य वशी महाप्रलये विलुप्तस्यास्य त्रिलोकस्य निर्माणे प्रभुरित्यर्थः, स धाता यथा पूर्वं यथा क्रमेण सूर्याचन्द्रमसौ अकल्पयत । निर्मितवान् कि भूतौ सूर्याचन्द्रमसौ अहोरात्राणि विदधत् कुर्वाणौ सूर्यएवाहः करोति चन्द्रएव रात्रिं करोति इत्यभिप्रायः, ततः सूर्यचन्द्रयोरुत्पत्त्यनन्तरं संवत्सरो अध्य जायत समुत्पन्नः । सूर्यचन्द्रोत्पत्त्यनन्तरमेव रात्रिदिवसविभागो

सति संवत्सरव्यवस्था भवति। संवत्सरस्याहोरात्रघटितत्वादित्यर्थः। अथानन्तरं दिवं च पृथिवीं च अन्तरिक्षं च स्वश्च एतान् लोकान् स एव धाता पूर्वं अकल्पयत। सृष्टवान् चराचरात्मकसकललोकानेव धाता सृष्टवान् इत्यर्थः। अत्र स्वःशब्देन नक्षत्रलोकोपरिस्थ-स्वर्लोकउच्यते द्युशब्देन तदूर्ध्वस्थमहर्लोकादिलोकचतुष्टयमिति हलायुधः। तदनेन मन्त्रेण सृष्टिस्थितिप्रलयाः प्रतिपादिता, विद-धदिति द्विवचने एकवचनं सुपाँ सुपो भवन्तीत्यादेः अर्णवइति अर्णस्शब्दात् अर्णसो लोपश्चेति वप्रत्ययः सकारलोपश्च। अत्र मत्सम्प्रदाये मार्जनं। तत्र गायत्रीमन्त्रः। अपोहिष्ठेत्यादिमन्त्रा अग्रे व्याख्यातव्याः। प्रथमं गायत्री व्याख्यायते तदन्वयितया पश्चादाहृतयः॥

तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि॥

धियो यो नः+प्रचोदयात्॥ १॥

तत् तस्य भर्गस्तेज धीमहि ध्यायेम: चिन्तयामः अत्र यद्यपि तदिति पदं भर्गविशेषणं नास्ति तथाऽपि तच्छब्दप्रयोगादेव यच्छब्दप्रयोगो लभ्यते। तथा च योगियाज्ञवल्क्यः, तच्छब्देन तु यच्छब्दो बोद्धव्यः सततं बुधैः, उदाहृते तु यच्छब्दो तच्छब्दः स्यादुदाहृतइति॥ तस्य कस्य सवितुः। सर्वभावानां प्रसवितुः। तथा च याज्ञवल्क्यः, सविता सर्वभूतानां सर्वभावान् प्रसूयते। सवनात्पावनाच्चैव सविता तेन चोच्यते॥ १॥

पुन किं भूतस्य देवस्य दीप्तक्रीडादियुक्तस्य, तथा च याज्ञवल्क्यः।

दीव्यते क्रीडते यस्मात् द्योतते रोचते दिवि, तस्माद्देव इति

प्रोक्तः स्तूयते सर्वदेवतैरिति ॥२॥ तं कं यो भर्गो नोऽस्माकं धियो बुद्धी. प्रचोदयात् प्रेरयति धर्मार्थकाममोक्षेषु । अस्मदादीनां तु बुद्धिं योजयति इत्यर्थः । तथा च याज्ञवल्क्यः। चिन्तयामो वयं भर्गं धियो यो नः प्रचोदयात् । धर्मार्थकाममोक्षेषु बुद्धिवृत्ती. पुनः पुनरिति ॥३॥ तदिह भर्गशब्देन बहुविधमाहात्म्यमुक्तम् । सवितृमण्डलगतादित्यदेवता स्वः पुरुषउच्यते ॥

भ्रस्जपाके भवेद्धातुर्यस्मात्पाचयते ह्यसौ ॥ भ्राजते दीप्यते यस्माज्जगच्चान्ते हरत्यपि ॥ ४ ॥

कालाग्निरूपमास्थाय सप्तार्चिः सप्तरश्मिभिः ॥ भ्राजते यत्स्व रूपेण तस्माद्भर्गः स उच्यते ॥ ५ ॥

तथा, भेति भीषयते लोकान् रेति रञ्जयते प्रजाः ॥ गत्या गच्छत्यजस्रं यो भगवान् भर्गउच्यते, बुधैरितिशेषः ॥ ६ ॥

अत्र यद्यपि सवितुर्भर्गइति सवितृभर्गयोर्भिन्नता गायत्रीमन्त्रे प्रतीयते। तथाऽपि परमार्थचिन्तायां सवितृभर्गयोर्भेदो न विद्यते स एव सविता स एव भर्गः सवितृभर्गयोरद्वैतमेव तथा च राहोः शिरइतिवत्षष्ठी न भेदसाधिका पुनरपि किं भूतं भर्गं वरेण्यं वरणीयं प्रार्थनीयं जन्ममृत्युदुःखनाशाय ध्यानेनोपासनीयमित्यर्थः। तथा च याज्ञवल्क्यः। वरेण्यं वरणीयं च संसारभयभीरुभिः ।

आदित्यान्तर्गतं यच्च भर्गाख्यं वा मुमुक्षुभि ॥ ७ ॥

जन्ममृत्युविनाशाय दुःखस्य त्रिविधस्य च ॥ ध्यानेन पुरुषो यस्तु द्रष्टव्यः स सूर्यमण्डले इति ॥ ८ ॥ एवं गायत्र्यास्तस्य च माहात्म्यमुपवर्ण्य पुनस्तस्यैव महाप्रभावत्वं सप्तव्याहृतिभिर्विशेषणी भूताभिरभिधीयते । तद्यथा। कि भूतं भर्गः भूरादिव्याप्य तिष्ठन्तमिति शेषः तथा च भूरादि सप्तलोकप्रकाशकं भूर्भूमिलोकः, एव

मुपर्युपरि भुव: भुवर्लोक: अन्तरिक्षं, स्व: स्वर्लोक:, मह्रर्महर्लोक: जन: जनलोक, तप: तपोलोक:, सत्यं सत्यलोक:, एवमुपर्युपरि क्रमेणावस्थितान्सप्तलोकानभिव्याप्यावतिष्ठमानोऽसौ भर्ग: एतान् सप्तलोकानिव प्रदीपवत् प्रकाशयतीत्यर्थ:, यद्वा भूरादीनां भर्गादिभेदएव प्रतिपाद्य सप्तमहाव्याहृतयएवेति किं भूतं भर्गं आपो ज्योतीरसोऽमृतं ब्रह्म भूर्भुव: स्वरोम् एतद्रूपमित्यर्थ: ॥

सूर्यश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्य: पापेभ्यो रक्षन्तां यद्रात्र्या पापमकार्षं मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना रात्रिस्तदव लुंपतु यत्किञ्चिद्दुरितं मयि इदमहममृतयोनौ सूर्ये ज्योतिषि जुहोमि स्वाहा ॥ २ ॥

मा मां सूर्यश्च मन्युश्च मन्युपतयश्च रक्षन्तां मन्युर्यज्ञ: मन्युपतय: यज्ञपतय:, इन्द्रादय: केभ्य: रक्षन्तां मन्युकृतेभ्य: पापेभ्य: असाङ्गयज्ञकृतेभ्यइत्यर्थ: यद्वा मन्यु: क्रोध: क्रोधपतय: इन्द्रियाणि क्रोधकृतेभ्य: पापेभ्यो रक्षन्तां क्रोधाऽनुत्पादेन तथा च ममैतादृश: क्रोधो मा भवतु येनाहमकार्यं न करोमि इत्यर्थ:, किं च यत्पापं मनसा वाचाहस्ताभ्यां पद्भ्यामुदरेण शिश्ना रात्र्याऽकार्षं कृतवानस्मि तत्पापं रात्रि: अवलुंपतु नाशयतु किं च यत्किञ्चिन्मयि मदाश्रितं अन्यदपि पापं तस्माद्रक्षतां मां किं हे आप: तदिदं पापं अहं सूर्ये जुहोमि। किं भूते सूर्ये ज्योतिषि हृदयमध्यस्थितप्रकाशरूपे पुन: किं भूते अमृतयोनौ मोक्षकारणे स्वाहा सुहुतं भवतु। अत्र मन्युर्यज्ञे क्रतौ क्रुधीत्यमर:। शिश्नादिति शिश्नेनेति प्राप्ते छान्दसत्वादिनादेशो न भवति। ( आप: पुनन्त्वित्यादि )।

आपः पुनन्तु पृथिवीं पृथ्वी पूता पुनातु मां
पुनन्तु ब्रह्मणस्पतिर्ब्रह्मपूता पुनातु मां ।
यदुच्छिष्टमभोज्यं च यद्वा दुश्चरितं मम सर्वं
पुनन्तु मा मापोऽसतां च प्रतिग्रहᳫं स्वाहा ॥३॥

आपः पृथिवीं पुनन्तु पवित्रां कुर्वन्तु पृथ्वी अद्भिः पूता सती मां चेतन्नं पुनातु न केवलमापः पृथिवीं पुनन्तु किं तु ब्रह्मणस्पतिं ज्ञानस्य पतिं पुनन्तु यद्वा वेदस्याश्रयं परमात्मानमपि पुनन्तु ब्रह्म-पूता पूतं सन्मां पुनातु। अत्र च पृथिवीशब्देन पार्थिवो देहो विवक्षितः, ततश्च आपः पृथिवीं पुनन्तु पृथिवीमयं मदीयं पार्थिवं देहं पुनातु इत्यर्थः। तथा च देहपापबलत्वद्वारा मा मां आपः पुनन्तु इति फलितार्थः । कुत्र मम यदुच्छिष्टमपावनं अभोज्यं निन्दितभोज्यं। यद्वा दुश्चरितं असदाचरणं असतामप्रतिग्राह्याणां प्रतिग्रहं च तत्सर्वं तत्र सर्वत्र मां आपः पुनन्त्वित्यर्थः, इत्यमाशास्य आपः आचम्यन्ते ताः स्वाहा सुहुता भवन्तु। तथा च आपः आचमनेन मदीयदेहपावनपूर्वकमुच्छिष्टत्वादिरूपं मां पावयन्तु इत्याशंसा वाक्यार्थः, अत्र पतिः सुपां सुपो भवन्तीति द्वितीयार्थे प्रथमा। पूताइति पूतमित्यत्रार्थे लिङ्गव्यत्ययेन सर्वमिति सप्तमीस्थाने द्वितीया। ओंअग्निश्चमेति॥

ओंअग्निश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः
पापेभ्यो रक्षन्तां यदह्ना पापमकार्षं मनसा

वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना अहस्त-
दवलुंपतु यत्किञ्चिद्दुरितं मयि इदमहमऽमृ-
तयोनौ सत्ये ज्योतिषि जुहोमि स्वाहा ॥ ४ ॥

सत्ये ब्रह्मणि सूर्ये वा अन्यत्सर्वं सूर्यस्वमेति मन्त्रवद्बोद्धव्यम् ॥

आपो हि ष्ठा मयोभुवस्ता नऽऊर्ज्जे
दधातन । महेरणाय चक्षसे ॥ ५ ॥

अग्रेतच्छब्दो परदानात्। यच्छब्दोऽध्याहार्यः, हे आपः याः यूयं मयोभुवः स्थ, मयइति सुखनाम सुखभावयितृ्यः भवथ सर्वप्राणिनामिति शेषः, हिशब्दोऽनर्थकः, ता यूयं ताः अस्मान् ऊर्ज्जे अन्नाय दधातन स्थापयत यथा वयं सर्वस्यान्नादेः भोजका भवेमः । तथा कुरुतेत्यभिप्रायः, अन्नाधीनमेवसुखमिति भावः, किं च महे महते रणाय दर्शनाय महद्दर्शनं ब्रह्मदर्शनार्थं चक्षसे व्याख्यानाय च दधातन, चक्षिङ्संख्याने, यद्वा महते चक्षसे दर्शनाय रणाय रमणीयाय ब्रह्मदर्शनायेत्यर्थः । अथ वा हि शब्दो यस्मादर्थे हे आपः यस्मान्मयोभुवः स्थ ताः तस्मान्नः ऊर्ज्जे दधातनेत्यन्वयः । ताः शब्दः प्रथमान्तः ॥

यो वः शिवतमो रसस्तस्य भाजयतेह नः ॥
उशतीरिव मातरः ॥ ६ ॥

हे आपः यश्च वः । युष्माकं शिवतमः । कल्याणतमो रसः नः ऽस्मान् तस्य भाजयत भागिनः कुरुत उशतीरिव मातरः । उशती

कामयमाना मातरइव, वशकान्तौ। इति धातोः कृतसंप्रसारणस्यै-तद्रूपं। तथा च यथा पुत्रस्य कल्याणं कामयमाना मातरस्तैस्तन्या-दिरसैस्तं भावयेयुः एवं भाजयत ॥

तस्मा ऽअरंगमाम वो यस्य क्षयाय जिन्वथ ॥
आपो जनयथा च नः ॥ ७ ॥

हे आपः तस्य रसस्य पूर्वकथितस्य वः युष्मत्सम्बन्धिनः अरं अलं पर्याप्तिं सदा तृप्तिं गमाम गच्छामं, अलमिति रलयोरेकत्व स्मरणात्। यस्य क्षयाय जिन्वथ क्षयाय यस्य यस्य क्षयस्य धन-स्थानस्य यस्य यस्य निवासस्य पञ्चाहुतिपरिणामक्रमेण ब्रह्मादि-स्तम्बपर्यन्तस्य जगतः एकदेशेन जिन्वथ तर्पथ, जिन्वतिः प्रीति-कर्मा तत्र हे आपः नः अस्मान् जनयथ भोक्तृत्वेनेति शेषः।

द्रुपदादिव मुमुचानः स्विन्नः स्नातो मलादिव ॥
पूतं पवित्रेणेवाज्यमापः शुन्धन्तु मैनसः ॥ ८ ॥

मा मां आपः जलानि शुन्धन्तु शोधयन्तु कुतः एनसः पापात्। कथमिव द्रुपदात् मुमुचानः स्विन्नइव स्विन्नः स्वेदवान्, आतपइ-त्यर्थः तथा च द्रुपदात् द्रुपदात् मुमुचानः बहिर्भवन् आतप यथा द्रुपद न स्पृशति तथा मां पापं नस्पृशत्वित्यर्थः स्नातो मलादिव यथा स्नातो मलात् मुक्तो भवति पवित्रेण पूतं आज्यमिव यथा आज्यं पवित्रेण पूतं भवति इत्यर्थः। ओंऋतं च सत्यमिति व्याख्यातम्।

अन्तश्चरसि भूतेषु गुहायां विश्वतो मुखः ॥
त्वं यज्ञस्त्व वषट्कार आपा ज्योतीरसोऽमृतम् ॥९॥

हे आपः । त्वं भूतेषु अन्तश्चरसि चरथ गुहायां विश्वतोमुखः विश्वतः विश्वस्मिन् मुखं संसरणं यासां ता विश्वतोमुखा इत्यर्थः । त्वं यज्ञस्त्वमेव यज्ञ एव त्वं वषट्कारः । त्व ज्योतिः रसः अमृतं च त्वमेवेत्यर्थः ॥

उद्वयन्तमसस्परिस्वः पश्यन्तऽउत्तरम् ॥
देवं देवत्रा सूर्य्यमगन्म ज्योतिरुत्तमम् ॥ १० ॥

उत् इत्युपसर्गः अगन्म इत्यनेन क्रियापदेन संबध्यते । वयं सूर्यं देवं उदगन्म उद्गच्छामः, वयं किं भूताः स्वः स्वर्लोकं परिपश्यन्तः सर्वतो भावेन पश्यन्तः स्वः किं भूतं तमसः प्रकाशभूतात् भूर्लोकात् उत्तर ऊर्द्ध्वं स्थितमित्यर्थः वयं किं भूताः देवत्रा देवेन सूर्येण त्राणं येषां ते, सूर्यं किं भूतं ज्योतिः स्वरूपं किं भूतं उत्तमं सर्वज्योतिषामग्न्यादीनामुत्कृष्टं अयमत्र वाक्यार्थः, वयं सूर्येण रक्षिताः भूर्लोकस्योपरि स्थितं स्वर्लोकं पश्यन्तस्तमतिक्रम्य परं ज्योतिः स्वरूपे सूर्ये संगता भवाम इति सूर्यप्रार्थना ॥

ओंउदुत्यं जातवेदसं देवं वहन्ति केतवः ॥
दृशे विश्वाय सूर्य्यम् ॥ ११ ॥

उत् इत्युपसर्गः वहन्तीत्यत्रान्वेति उशब्दः शोभार्थः त्यमिति त्यद्शब्दस्य प्रयोगः त्यं तं सूर्यं देवं केतवः रश्मयः उद्वहन्ति ऊर्द्ध्वं

नयन्ति । सूर्यं किं भूतं जातवेदसं अग्नितेजोमयं यद्वा जातं वेदः कर्मफलं यस्मात्तं जातवेदस किमर्थमुद्वहन्ति विश्वस्य दृशे दर्शनाय उद्वहन्ति अयं वाक्यार्थः, तेजःस्वरूपं सूर्यं देवं विश्वप्रकाशनार्थं रश्मय ऊर्द्ध्वं वहन्ति इति आदित्योत्कीर्त्तनं कीदृशोसौ सूर्यइत्याकाङ्क्षायामाह (१)॥

ओंचित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य
वरुणस्याग्नेः ॥ आ प्रा द्यावापृथिवीऽ अन्त-
रिक्षᳪ सूर्य्यऽआत्मा जगतस्तस्थुषश्च ॥ १२ ॥

असौ सूर्यश्चित्रमाश्चर्यरूपं यथा एवमुदगात् । उदितो बभूव । किं भूतः सूर्यः मित्रस्य वरुणस्याग्नेः त्रयाणां देवानां चक्षुः अक्षि भूतः पुनः किं भूतः देवानामनीकं मित्रादिव्यतिरिक्तानामन्येषां समूहः उदुत्यं च द्यावापृथिव्यो अन्तरिक्षं च स्वर्गमर्त्याकाशं आप्राः आपूरितवान् स्वस्य रश्मिजालेनेति शेषः, पुनः किं भूतः जगतः जङ्गमस्य तस्थुषः स्थावरस्य चात्मा स्थावरजङ्गमात्मकसकलसंसारमयोऽयमेव सूर्यइत्यर्थः, आप्रा इति आङ्पूर्वस्य पूरणइत्यस्य लङ्प्रथमेकवचनस्थाने तिङां तिङो भवन्तीति मध्यमपुरुषैकवचनं तच्चक्षुः । किं भूतमित्याकाङ्क्षायां पुनराह ॥

ओंतच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् ॥ पश्येम
शरदःशतं जीवेम शरदःशतᳪ शृणुयाम

(१) उदुत्यमित्यत्र मध्यवर्त्ती उकार शोभार्थः । विश्वायेत्यत्र षष्ठार्थे चतुर्थीति बोध्यम् ॥

शरदः शतं प्रब्रवाम शरदः शतमदीनाः
स्याम शरदः शतं भूयश्च शरदः शतात् ॥ १३ ॥

तत्पूर्वं चक्षुः कीदृशं देवहितं देवानां समीहितकर्तृ पुनः किं भूतं पुरस्तात् शुक्रं शुक्लं निर्मलं । पुनः किं भूतं पुरस्तात् प्राच्यां दिशि उच्चरत् उद्गच्छत् उदेत् तस्योपस्थानं कृत्वा शरदः वर्षस्य शत पश्येम एवं शरदः शतं जीवेम शरदः शतं शृणुयाम शरदः शतं प्रब्रवाम प्रकर्षेण ब्रुवाम शरदः शतं अदीना उद्भवेम किं च न केवलं शरदः शतं किं तु शरदः शतादपि भूयः अधिकं पश्येमेत्यादि सर्वत्रान्वेति ॥

तेजोऽसि शुक्रमस्यमृतमसि धाम नामासि
प्रियं देवानामनाधृष्टं देवयजनमसि ॥ १४ ॥

गायत्रीं स्तौति त्वं तेज असि शुक्रमसि अमृतमसि धाम गृहमसि नाम अभिधानमसि यत् देवानां अनाधृष्टं उत्कृष्टं प्रियं तत्त्वमेवासि देवयजनं देवा इज्यन्ते अनेनेति देवयजनं मन्त्रादि तत्त्वमेवासि ॥

गायत्र्यस्येकपदी द्विपदी त्रिपदी
चतुष्पद्यपदसि न हि पद्यसे नमस्ते
तुरीयाय दर्शताय पदाय परो रजसे ॥ १५ ॥

त्वं गायत्र्यसि गायन्तं त्रायतइति गायत्री एकपदी द्विपदी त्रिपदी चतुष्पदीति स्वरूपकथनं अपदसि न पद्यते ज्ञायते इत्यपत् ।

एतदेवाह । नहि पद्यसे किं च ते तुरीयाय पदाय स्वरूपाय ब्रह्म-विष्णुशिवभिन्नाय ब्रह्मस्वरूपाय नमः अस्त्विति शेषः । यद्वा विराट् हिरण्यगर्भादिकारणोपाधित्रयहीनाय ईशपदाय यद्वा वैषरीरूपाय नमः, अस्त्विति शेषः पदाय किं भूताय दर्शताय दर्शनीयाय ध्यानेनेति शेषः । परो रजसे रजसः परभूताय शुद्धसत्वस्वरूपायेत्यर्थः । (१) अथ तर्प्पणमन्त्रव्याख्या ॥

ओंउदी॑रता॒मव॑र॒ऽउत्पर॑ा॒स॒ऽउन्म॑ध्य॒माः)
पि॒तर॑ः॒ सो॒म्यास॑ः ॥ असु॒ँय्यऽई॒युर॑वृ॒काऽऋ॑-
त॒ज्ञास्ते नो॑ऽवन्तु पि॒तरो॒ हवे॑षु ॥ १ ॥

उदित्युपसर्गः अवरे एतल्लोकवर्त्तिनः पितरः उदीरतां ऊर्द्धं क्रमन्तां गच्छन्तु परा एव परासः येऽपि पितरः परासः उत्कृष्टलोकेऽवस्थिताः तेऽपि उदीरतां तस्मादपि स्थानात् विशिष्टतरं स्थानं गच्छन्तु । उन्मध्यमाः मध्ये भवा मध्यमाः येऽपि मध्यमा मध्यमलोकस्थाः तेऽपि ततोऽपि उदीरतां विशिष्टतरं स्थानंगच्छन्तु पितरः किं भूताः सोम्यासः सोमसम्पादिनः । असुंयऽईयुरिति । ये स्वयं प्राणं वायुं अन्वायुः अनुगताः वातात्मानइत्यर्थः । तेऽपि उदीरतां येऽपि अवृकाः अनमित्राः वृको मित्रः मध्यस्थमाश्रिताइत्यर्थः । ऋतज्ञाः सत्यज्ञानाः स्वाध्यायनिष्ठाः यज्ञनिष्ठा वा तेऽपि ततोऽपि विशिष्टमुत्कृष्टस्थानं गच्छन्तु एवं स्वकीयेन कर्मणा ये अस्मदीयाः पितरः । उन्नतिं प्राप्तास्ते नः अस्मान् हवेषु आह्वानेषु अवन्तु पालयन्तु ॥ १ ॥ अङ्गिरसोन इति ॥

(१) बृहदारण्यकाण्डस्य शतपथब्राह्मणस्यायमुपस्थानमन्त्रो गायत्र्या इति ।

ओ३म् अङ्गिरसो नः पितरो नवग्वा ऽअथर्वाणो भृगवः सोम्यासः ॥ तेषां वयᳫं सुमतौ यज्ञियानामपि भद्रे सौमनसे स्याम ॥ २ ॥

वयं तेषां पितॄणां सुमतौ कल्याणमतौ स्याम मद्विषये कल्याणी मतिर्भवत्वित्यर्थः। यज्ञियानां यज्ञसम्पादिनां अपि च भद्रे वन्दनीये सौमनसे कल्याणमनसि स्याम भवेम ते के ये नः। अस्माकं पितरः अङ्गिरसः अङ्गिराऋषिस्तस्यापत्यानि बहूनि ये च नवग्वा. नवगतयः पुनः पुनरागत्यागत्य गच्छन्ति यद्वा नवग्वा नवनीया स्तोतव्या गतिर्येषां ते ये च। अथर्वाणः अथर्वणो अपत्यानि अथर्वाणः असंचारिण इति वा, अथर्वेति अभिचाराचरणकर्माणः भृगवः भृगोरपत्यानि, सोम्यासः सोमसम्पादिनः ॥ २ ॥

आयन्तु नः पितरः सोम्यासो ऽग्निष्वात्ताः पथिभिर्देवयानैः ॥ अस्मिन् यज्ञे स्वधया मदन्तोऽधिब्रुवन्तु तेऽवन्त्वस्मान् ॥ ३ ॥

४

नः अस्माकं पितरः आयन्तु आगच्छन्तु किं भूताः सोम्यासः सोमसम्पादिनः पुनः किं भूता ऽअग्निष्वात्ताः अग्निना सुष्ठु यथा स्यादेवं आत्ता भक्षिताः श्रौतस्मार्ताग्निदग्धाइत्यर्थ, यद्वा अग्निना दग्धाएवोच्यन्ते तथा एव श्राद्धयोग्याइत्यभिप्रायः, कैः आयन्तु पथिभिर्मार्गैर्देवयानैः देवस्य यानं गमनं यत्र तैर्देवैः सह गमनैरिति यावत्। देवैः सह यायिनस्ते पितरो येषां पुत्रपौत्रप्रपौत्रैर-

तत्कर्म क्रियते। उक्तं च, पुत्रेण लोकान् जयति पौत्रेणानन्त्यमश्नुते। अथ पुत्रस्य पौत्रेण ब्रध्नस्याप्नोति लोकतामिति, आगत्य च ते पितरः अस्मिन् यज्ञे श्राद्धे स्वधया अन्नेन मन्दतः परितृप्यन्तः तुष्टाः सन्तः अस्मान् अधिब्रुवन्तु अधिकं ब्रुवन्तु श्लाघयन्त्वित्यर्थः किं च अवन्तु रक्षन्तु ॥ ३ ॥

ऊर्ज्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतम् ॥ स्वधा स्थ तर्पयत मे पितॄन् ॥

हे आपः यूयं स्वधा स्थ पितॄणामन्नं भवथ स्वं आत्मानं शरीरं दधति पोषयतीति स्वधा । धापोषणे, तदपि पितॄणामेव । तथा च श्रुतिः स्वधा पितॄणामन्नमिति, तेन मे मम पितॄन् तर्पयत तृप्तान्कुरुत यूयं किं भूताः ऊर्ज्जं वहन्तीः ऊर्ज्जमन्नं वहन्त्यः प्रापयन्त्यः । ऊर्ज्जं किं भूतं अमृतं घृतं पयः कीलालं परिस्रुतं एतद्रूपमित्यर्थः, अमृतं देवानामन्नं घृतं प्रसिद्धं पयो दुग्धं कीलालं पशुः कीलं बन्धनयोग्यमस्येति कीलालं परिस्रुतं स्वधा। तथा च। यतो नाना विधमन्नं वहन्त्यः स्वधा भवथ तस्मान्मम पितॄन् तर्पयतइति वाक्यार्थः ॥ ४ ॥

पितृभ्यः स्वधायिभ्यः स्वधा नमः पितामहेभ्यः स्वधायिभ्यः स्वधा नमः प्रपितामहेभ्यः स्वधायिभ्यः स्वधा नमः ॥ अक्षन्पितरोऽमीमदन्त पितरोऽतीतृपन्त पितरः पितरः शुन्धध्वम् ॥ ५ ॥

स्वधायिभ्यः पितृभ्यः स्वधा नमः स्वधास्तु अन्नमस्त्वित्यर्थ, स्वधां प्रति गमनशीलाः स्वधायिनः (सुप्यजातौणिनिस्ताच्छील्ये) पितृभ्यः

इति बहुवचनं पितृव्यसापेक्षं पूजार्थं वा, एवं पितामहेभ्यः प्रपितामहेभ्यः स्वधा नमः अत्रापि बहुवचनं पूर्ववत् । किं च अक्षन् अन्नवन्तः, अदभक्षणे, तथा च अन्नवन्तः भक्षितवन्तः पितरः अमीमदन्तः मदिता भवन्तु मदिताः पितरः । अतीतृपन्त तर्पिता भवन्तु किं च हे पितरः शुन्धध्वं पापप्रक्षालनं कुरुध्वम् ॥

ओं ये चेह पितरो ये च नेह यांश्च विद्म यां
उ च न प्रविद्म ॥ त्वं वेत्थ यति ते जातवेदः
स्वधाभिर्यज्ञꣳ सुकृतं जुषस्व ॥ ६ ॥

हे जातवेदः अग्ने तान् पितृन् त्वं वेत्थ जानासि अतएवमुच्यते स्वधाभिः पितृसम्बन्धिहविर्भिर्यज्ञं सुकृतं साधुकृतं जुषस्व सेवस्व ते के ये इह सन्ति अस्मत्समीपे इह लोके वा आसते ये च इह नासते ऽन्यत्र सन्ति यान् पितृन् विद्मः अवगच्छामः यांश्च न विद्मः न प्रजानीमः, उकारः पादपूरणे, पितॄन् किंभूतान् यति अविभक्तिकोयं निर्देशः यतीन् शुचीन् नित्यनैमित्तिककर्मरतान् निर्दग्धकल्मषान् ॥

मधु व्वाताऽऋतायते मधु क्षरन्ति
सिन्धवः ॥ माध्वीर्नः सन्त्वोषधीः ॥ ७ ॥
मधु नक्तमुतोषसो मधुमत्पार्थिवꣳ रजः ॥ मधु
द्यौरस्तु नः पिता ॥ ८ ॥ मधुमान्नो
व्वनस्पतिर्म्मधुमाँ२ऽअस्तु सूर्य्यः ॥
माध्वीर्गावो भवन्तु नः ॥ ९ ॥

वाताः वायवः मधु ऋतायते ऋतायन्तां उपगच्छन्तु वायवो मधु वहन्त्वित्यर्थः सिन्धवः चरन्तु नद्यो मधुमत्यो भवन्तु ओषधीः ओषध्यः धान्यादयः माध्वीः मधुमय्यः सन्तु नक्तं रात्रिः मधुः अस्त्विति शेषः मधुमतीर्भवन्तु उत समुच्चये उषसोऽपि प्रातः काला अपि मधुमया भवन्तु पार्थिवं रजः मधुमदस्तु द्यौः स्वर्गः मधुमदस्तु द्यौः किं भूता पिता पितेव सर्वस्यानुकूलेत्यर्थः वनस्पतिः सोमः नः मधुमानस्तु । सूर्यश्च नः अस्माकं मधुमानस्तु गावश्च माध्वी मधुमय्यो भवन्तु, ऋतायतीति ऋगतिप्रापणयोरिति धातोर्लट्तिङां तिङो भवन्तीति बहुवचने एकवचनं । चरन्तीत्याशंसायां लोट् माध्वीरिति सुपां सुपो भवन्तीति प्रथमायां द्वितीया सर्वमेतन्मधुमयं भवत्वित्याशंसा वाक्यार्थः ॥ ९ ॥

नमो वः पितरो रसाय नमो वः पितरः शोषाय नमो वः पितरो जीवाय नमो वः पितरः स्वधायै नमो वः पितरो घोराय नमो वः पितरो मन्यवे नमो वः पितरः पितरो नमो वो गृहान्नः पितरो दत्त सतो वः पितरो देष्म ॥ १० ॥

हे पितरः वः युष्माकं सम्बन्धिभूताय रसाय रसप्रधानाय वसन्ताय नमः वसन्ते हि मध्वादयो रसा भवन्ति, यद्वा ऋतुरूपतया पितरएव नमस्क्रियन्ते । हे पितरो वो युष्मभ्यं रसाय वसन्तरूपेभ्यो नमः एवमग्रेऽपि व्याख्येयम् । शोषाय शोषप-

धानाय ग्रीष्माय ग्रीष्मेऽपि ओषधयः शुष्यन्ति जीवाय जीवन हेतुभूताय वर्षाभ्यः स्वधायै पितॄणामन्नहेतुभूताय। शरदे शरदि प्रापणे व्रीह्यादयो भवन्ति। घोराय हेमन्ताय हेमन्तो हि घोरः। शीतप्राचुर्यात्। मन्यवे शिशिराय मन्युः क्रोधः क्रुद्ध इव शिशिरः ओषधीर्दहति। नमो वः पितरः पितर इत्यादरार्थे वीप्सा। हे पितरः वः युष्माकं नमः नः अस्मभ्यं गृहान् दत्त भार्यापुत्रपौत्रादयो गृहशब्देनोच्यन्ते किं च युष्मत्प्रसादात्तथा भवतु यथा हे पितरः गृहे सतः विद्यमानात् द्रव्यात् वः युष्मभ्यं देष्म दास्यामः तथा च तादृग्वस्तु मम गृहं मा त्यजत्वित्याशास्महे ॥ १० ॥

अथ तर्पणोत्तरकर्ममन्त्राः

ब्रह्म॑ ज॒ज्ञा॒नं प्र॑थ॒मं पु॒रस्ता॒द्वि सी॑म॒तः सु॒रुचो॑ वे॒नऽआ॑वः ॥ स बु॒ध्न्याऽउप॒माऽअ॑स्य वि॒ष्ठाः स॒तश्च॒ योनि॒मस॑तश्च॒ वि व॑: ॥ १ ॥

ब्रह्म आदित्यरूपं पुरस्तात् प्राच्यां दिशि प्रथमं जज्ञानं जायत इत्यर्थः ततोऽनन्तरं सीमतः मध्यस्थानात् इमान् लोकान् यो वि वः आ वः व्याप्नोति विवृतान् करोति मध्यस्थानात् किं भूतात् सुरुचो रोचमानात् यद्वा लोकानित्यस्य विशेषणं सूर्यः किं भूतः वेनः कान्तो मेधावी वा स एवादित्यः बुध्न्याः स यस्याश्च दिश इति यावत्, वि इत्यस्य आव इत्यनेनान्वयः बुध्नमन्तरिक्षं तत्र भवा बुध्न्या उपमीयन्त आसु स्थितानि भूतानीत्युपमा। किं च अस्य जगतः विष्ठाः विविधं स्थानं सतः विद्यमानस्य घटादेः

मूर्त्तस्य असतः अमूर्त्तस्य आकाशादेः योनिं स्थानं च विवृणोति तस्मात् आदित्यएव सर्वप्रकाशकः। इति स्तूयते ॥ १ ॥

इदं विष्णुरिति व्याख्यातम् ॥२॥ नमस्तइति व्याख्यास्यते॥३॥ आकृष्णेनेति देवपूजायाम् ॥ ४ ॥

ओमित्रस्य चर्षणीधृतोऽवो देवस्य सानसि ॥ द्युम्नं चित्रश्रवस्तमम् ॥ ५ ॥

चर्षणीधृतः मनुष्याणां धारणेऽधिकृतस्य मित्रस्य अवः रक्षणं वर्द्धयन् स्तुम इति वाक्यशेषः अवः कीदृशं सानसि सनातनं। पुराणं किं च द्युम्नं यशः अन्नं च याचेमहीति वाक्यार्थः, द्युम्नं किं भूतं चित्रश्रवस्तमम्। अतिशयेन चयनीयं। अथवा यस्य एतादृशः अवः द्युम्नं च स यजमानस्याभिमतं साधयत्वित्यर्थः ५॥ इममिइति व्याख्यातम् ॥ ६ ।

ओंअदृश्रमस्य केतवो व्विरश्मयो जनाँऽ ॥ २ ॥ अनु ॥ भ्राजन्तो अग्नयो यथा ॥ ७ ॥

अदृश्रमस्य केतवइत्यादि अस्य सूर्यस्य रश्मयः अदृश्रं अदृश्यन्त इत्यर्थः छान्दसं रूपम्, रश्मयः किं भूताः केतवः ज्ञानजनकाः केतुरिति विज्ञाननामसु पठितमित्युवटः, विइत्यनर्थकः, पुनः किं भूतान् जनान् अनुगताः पुनः कीदृशाः भ्राजन्तो दीप्यमानाः कीदृशाः दृश्यन्ते यथा अग्नयः ॥ ७ ॥

हꣳसः ऽशुचिषद्वसुरन्तरिक्षसद्धोता व्वेदिषदतिथिर्दुरोणसत् ॥ नृषद्वरसदृतसद्व्योमसदब्जा गोजाऽऋतजाऽअद्रिजाऽऋतं बृहत् ॥ ८ ॥

सूर्यं स्तौति हंसः सूर्यः हन्ति गच्छन्तीति हंसः, शुचिषत् शुचौ वह्निमण्डले सीदतीति शुचिषत् । वसुः तेजोरूपः आकाशेऽन्तरिक्षे सीदत्यन्तरिक्षसत् । होता होमन्त्रेण देवानामावाहनकर्त्ता वेदिषत् यज्ञवेद्यां अध्वर्युरूपेण सीदति । अतिथिः क्वचिदपि न स्थायी नित्यभ्रमणशीलः, दुरोणसत् । दुरोणे गृहे सीदतीति गृहस्थरूपोऽप्ययमेवेत्यर्थः, नृषत् नृषु मनुष्येषु सीदतीति जीवात्मत्वेनेति शेषः वरसत् वरेषु उत्कृष्टस्थानेषु स्वर्गादिषु सीदतीति देवत्वेनेति शेषः, ऋतसत् ऋतं सत्ये ज्ञाने सीदतीति परमात्मत्वेनेत्यर्थः, व्योमसत् व्योम अन्तरिक्षं तत्र सीदतीति ज्योतिः स्वरूपेण, अब्जाः अप्सु जायन्ते अग्निरूपेण, गोजाः गवि पृथिव्यां जायते जरायुजाण्डजस्वेदजोद्भिज्जरूपेणेति शेषः । ऋतजाः ऋते सत्ये जायन्ते त्रयीरूपेण । अद्रिजाः अद्रौ पर्वते जायते स्फुलिङ्गरूपेण ऋतं सूक्ष्मं बृहत्स्थूलं सर्वव्यापितया अनवच्छिन्नपरिमाणं इत्यर्थः । तथा चायमेव ब्रह्मरूपइति सूर्यस्तुतिः ।

ओं सँव्वर्च्चसा पयसा सन्तनूभिरगन्महि
मनसा सᳬशिवेन ॥ त्वष्टा सुदत्रो व्विदधातु
रायोऽनुमार्ष्टुतन्न्वो यद्विलिष्टम् ॥ ९ ॥

वयं वर्च्चसा ब्रह्मवर्च्चसेन पयसा दुग्धेन अर्थात् गोभिः भार्यापुत्रादिभिः शिवेन कल्याणेन मनसा च समगन्महि सङ्गता भवेमः अर्थात् त्वष्टुः प्रसादात किं च सुदत्रः कल्याणदः त्वष्टा मम रायो धनानि विदधातु । किं च तन्वः शरीरस्य यद्विलिष्ट मन्दश्लिष्टं

पापादि तत् अनुमार्ष्टु शोधयतु स एव, देवागातुविदइत्यग्रे व्याख्यास्यते ॥ ९ ॥

इति तर्पणोत्तरकर्ममन्त्रव्याख्या। अथ देवपूजामन्त्राः।

आकृष्णेन रजसा वर्त्तमानो निवेशयन्नमृतं मर्त्यं च ॥ हिरण्ययेन सविता रथेना देवा याति भुवनानि पश्यन् ॥ १ ॥

सविता आदित्यः आयात्यागच्छति किं भूतः सविता देवः स्तुतिदीप्तिक्रीडादियुक्तः केनायाति रथेन किं भूतेन हिरण्ययेन हिरण्मयेन सौवर्णेन किं कुर्वन् भुवनानि पश्यन् भुवनवर्त्तिलोकान पुण्यपापकर्तॄन् साक्षिवन्निरीक्षमाण इत्यर्थः न केवलमेवं किं तु अमृतं देवं मर्त्यं मनुष्यं च निवेशयन्। स्वे स्वे व्यापारे इति शेषः, मनुष्या हि सूर्योदये यागादिभिर्देवान् प्रीणयन्ति पुनः किं भूतः सविता आवर्त्तमानः पुनः पुनस्तमेव देशमागच्छन्। केन सह रजसा रात्रिकालेन प्रायो रात्रौ रजोगुणबाहुल्येन रजः शब्देन रात्रीरुच्यते किं भूतेन रजसा कृष्णेन मलिनेन प्रायो रात्रिकालेन पुण्यकर्मणामनुत्पादनात् रात्रेः कृष्णत्वमुक्तं अयं वाक्यार्थः। यः सविता देवो मनुष्यव्यापारस्य स्थापकः यश्च पुण्यपापसाक्षी (१) तस्मात्यन्तिकमुचितमिति। अत्र आयातीति व्यवहितेनात्र सम्बन्धः, आवर्त्तमानइत्यत्र, "छन्दसि व्यवहिताश्चेति पाणिनीयसूत्रात्। हिरण्यय इति हिरण्मयार्थेनिपातः ॥ १ ॥ (२)

(१) तस्यार्घादिकमुचितमिति 'क' पुस्तकपाठो बोध्य इति।

(२) स्मार्त्तकर्मणि अनेन मन्त्रेण सूर्यदेवस्य सपर्य्या ज्ञातव्या। अत्र प्रमाणं पाराशरस्मृतिवचनं आकृष्णेनेति मन्त्रेण सूर्यमाराधयेत्सुधीरिति।

गणानां त्वा गणपतिᳯ हवामहे प्रियाणां त्वा प्रियपतिᳯ हवामहे निधीनां त्वा निधिपतिᳯ हवामहे व्वसो मम ॥ आहमजानि गर्भधमात्वमजासि गर्भधम् ॥ २ ॥ (३)

हे वसो मम सर्वस्वभृत त्वा त्वां हवामहे । आह्वयामः । त्वां किं भूतं गणानां मध्ये गणपतिं गणाः कूष्माण्डादयः प्रियाणां मध्ये प्रियपतिं निधीनां मध्ये निधिपतिं निधयः पद्मादयः । तथा च विघ्नोपशमाय भार्यादिप्रियलाभाय च त्वां आह्वयामइति वाक्यार्थः । अश्वं प्रार्थयन्ते स्त्रिय अहमजानीति हे अश्व त्वां च अहं गर्भधं अजानि ज्ञातवती । अतः हे अश्व त्वं गर्भधं गर्भधो ममासि वेत्यर्थः ॥ २ ॥

अम्बे अम्बिकेऽम्बालिके न मा नयति कश्च न ॥ ससस्त्यश्वकः) सुभद्रिकां काम्पीलवासिनीम्॥३॥

अम्बा अम्बिका अम्बालिका एतानि दुर्गानामानि हे अम्बे हे अम्बिके हे अम्बालिके मा मां कश्च न कश्चिदपि न नयति न प्रापयति । स्वामिसन्निधानमिति शेषः । तथा च सति अश्वकः पतिः ससस्ति शेते अश्वशब्दः पतिवाचकः कुत्सायां कन् किं कृत्वा सुभद्रिकां परिरभ्येति शेषः सुभद्रिकां किं भूतां काम्पीलवासिनीं काम्पीलनगरं तत्र वसतीति काम्पीलवासिनीं । काम्पीले हि

(३) अनेन सर्वकर्मादौ विघ्नविनायकस्यावाहनादिकं विधेयमिति तत्रै वोक्तस ॥

स्वरूपाः सुभगा विनीताश्च स्त्रियो भवन्ति अत्रायं वाक्यार्थः अनेन मन्त्रेण सौभाग्यकामनया स्त्रिया देवीं पूज्यते हे अम्बे इत्यादिना दुर्गां सम्बोध्य कश्चिदपि मां स्वामिसन्निधिं न नयति तेन मया विना स मदीयः स्वामी अन्यां गृहीत्वा शेते ततो मया पूजिता भवती मां स्वामियुक्तां करोत्विति तात्पर्यम्। ससस्तीति ससस्वाप' इति धातोरूपम् ॥ ३ ॥ ( १ )

ओं॑ग्निं दू॒तं पु॒रो द॑धे हव्य॒वा॒ह॒मुप॑ब्रुवे ।
दे॒वाँ २ ॥ ऽआसा॑दया॒दि॒ह ॥ ४ ॥

अहं अग्निं पुरो दधे अग्रतः स्थापयामि अग्निं किं भूतं दूतं देवाह्वानकर्त्तारं पुनः किं भूतं हव्यवाहं हविषो वोढारं तदनन्तरं उपब्रुवे उपगत्य ब्रवीमि किं इह देवान् आसादयात् इह यज्ञगृहे इन्द्रादीन्देवानासादयेत्यर्थः ॥ ४ ॥ ( २ )

विष्णो॑ र॒राट॑मसि॒ व्विष्णोः॑ श्नप्त्रे॑ स्थो॒
व्विष्णो॒ः स्यूर॑सि॒ व्विष्णो॑र्ध्रु॒वोसि ॥
४
व्वै॒ष्ण॒वम॑सि॒ व्विष्ण॑वे त्वा ॥ ५ ॥

यज्ञगृहावयवस्पर्शने विनियोगोऽस्य मन्त्रस्य । तत्र रराटां स्पृशति रराटी वर्त्तिकाबन्धः । त्वं विष्णोरराटमसि रराटं ललाटं विष्णोः अग्रे स्रक्किणी स्थः येन सीव्यते तं प्रत्याह । विष्णोः स्यूरसि

(१) अनेन मन्त्रेण शक्तिमात्रार्चनं पाराशरेणाभिहितम् ॥
(२) अनया ऋचाऽग्न्यावाहनादिकं बोध्यम् ॥

सीव्यते अनेनेति स्यूः । ग्रन्थिं करोति विष्णोर्ध्रुवोऽसि ध्रुवः ग्रन्थि-समाप्तम् गृहं स्पृशति त्वं वैष्णवं । विष्णुदेवताकमसि अतस्त्वां विष्णवे स्पृशामीत्यर्थः ॥ ५ ॥ (३)

नमः॑ शम्भ॒वाय॑ च मयो भ॒वाय॑ च॒ नमः॑

शङ्क॒राय॑ च मयस्क॒राय॑ च॒ नमः॑ शि॒वाय॑

च शि॒वत॑राय च ॥ ६ ॥ (४)

शम्भवाय शिवाय नमः । शम्भवत्यस्मादिति शम्भवः । मयः सुखं भवत्यस्मादिति मयोभवस्तस्मै मयो भवाय शिवाय च शङ्करोतीति शङ्करः मयः सुखं करोतीति इति मयस्करः शिवाय कल्याणाय शिवतराय च । केचित् त्र्यम्बकं यजामहे इति मन्त्रेण पूजयन्ति स च नीलसूक्ते व्याख्यातव्यः । इति शम्भुघ्नविरचितायां मन्त्रार्थदीपिकायामान्हिकपरिच्छेदः ॥ १ ॥

अथ श्राद्धमन्त्रव्याख्यानम् ।

विश्वे॑ देवास॒ऽआग॑त शृणु॒ता म॒ऽइ॒मम्

हवम् ॥ एदं ब॒र्हिर्निषी॑दत ॥ १ ॥

हे विश्वेदेवाः यूयं मे मम इमं हवं आह्वानं शृणुत श्रुत्वा च आगत आगच्छत आगत्य च इदं बर्हिः कुशः अत्र निषीदत उपविष्टा भवत आसनार्थाय कल्पितेषु कुशेषु उपविष्टा भवतेत्यर्थः । अत्र विश्वेदेवास इति "आज्जसेरसुगिति" असुगागमः शृणुत इति तस्य तात् इति तस्यादेशः ॥

(३) अनेन विष्णोः पूजनादिकम् ।

(४) अनेन शिवार्चनं ज्ञातव्यमिति ॥

विश्वेदेवाः शृणुतेमᳮ हवं मे येऽ अन्तरिक्षे

यऽउप द्यविष्ठ॥ येऽ अग्निजिह्वाऽ उत वा यजत्राऽ

आसद्यास्मिन् बर्हिषि मादयध्वम् ॥ २ ॥

हे विश्वेदेवाः ते यूयं मे मम हव आह्वानं शृणुत ते के ये यूयं अन्तरिक्षे स्थ तिष्ठथ ये च उप समीपे पृथिव्यां ये च दिवि स्वर्गे स्थ ये च अग्निजिह्वा हविर्भोजनसाधनं येषां ते उत वा ये यजत्राः यजन्तं श्राद्धकारिणं त्रायन्त इति यजत्राः पुरूरवोमार्द्रवप्रभृतयः किं हवं अस्मिन बर्हिषि आसाद्य आसन्ना भूत्वा मादयध्वम् हृष्टा भवथ स्वार्थे णिच् ।

उशन्तस्त्वा निधीमह्युशन्तः समिधीमहि ॥

उशन्नुशत ऽआवह पितॄन् हविषे ऽअत्तवे ॥३॥

हे अग्ने त्वा त्वां निधीमहि आदधीमहि तवाधीनं कुर्मः इति यावत् । वयमित्यध्याहार्य्यं वयं किं भूताः । उशन्त,इच्छन्त,अर्थात्त्वां यद्वा पित्राह्वानं किं च उशन्तएव वयं त्वां समिधीमहि ज्वालयामः तेन त्वं पितॄन् आवह आह्वय त्वं किं भूतः उशन् इच्छन् हविरिति शेषः, पितॄन् किं भूतान उशन्तइच्छन्तः श्राद्धीयं हविरिति शेषः, आह्वानं किमर्थमित्याह । अत्तवे अदनाय, यद्वा हविषे हविषः अत्तवे अदनाय तथा च हे अग्ने एवमाराधितस्त्वमस्मत्पितॄनावाहयेति वाक्यार्थः । अत्तवे इति तुमर्थे तवेङ् प्रत्ययः ॥

आयन्तु नः पितरः सोम्यासोऽग्निष्वात्ताः

पथिभिर्देवयानैः ॥ अस्मिन् यज्ञे स्वधया

मदन्तोऽधिब्रुवन्तु तेऽवन्त्वस्मान् ॥ ४ ॥

नः अस्माकं पितरः आयन्तु आगच्छन्तु किं भूताः सोम्यासः सोमपाः पुनः किं भूताः अग्निष्वात्ताः अग्निना सुपथा स्वादेवं अत्ताः भक्षिताः श्रौतस्मार्त्ताग्निदग्धाइत्यर्थः, यद्वा अग्निना सुपथा स्वादेवं दग्धाः। तादृशाएव हि श्राद्धयोग्या भवन्त्यभिप्रायः, कैरागच्छन्तु पथिभिः किं भूतैः देवयानैः देवानां सञ्चारो यैरित्यर्थः। आगत्य च अस्मिन् यज्ञे श्राद्धयज्ञे अस्मानधिब्रुवन्तु अधिकं ब्रुवन्तु श्लाघयन्त्वित्यर्थ पितरः किं भूताः स्वधया श्राद्धीयान्नेन मदन्तः तृप्यन्तः किं च न केवलं अधिब्रुवन्तु किं तु ते अस्मानवन्तु च रक्षन्तु सोमपा अग्निष्वात्तादयः पितरः आगत्य मां श्लाघन्तां रक्षन्तु चेति वाक्यार्थः॥

शन्नो॑ देवीर॒भिष्ट॑य॒ऽआपो॑ भवन्तु पी॒तये॑॥
शँय्यो॑र॒भिस्र॑वन्तु नः॥ ५॥

आपः नो अस्माकं पितॄणामिति शेषः। शं भवन्तु कल्याण्यो भवन्तु किं भूता देवीः देव्यः स्तुतिक्रीडादियोग्याः किमर्थं अभिष्टये उपचयार्थं पीतये पानार्थं च किं च नः पितॄणां शं योः कल्याणयोग्याय अभिस्रवन्तु अभिमुखं स्रवन्तु, शयोरिति शं शब्दात् मत्वर्थीयो युस्प्रत्ययः चतुर्थ्यर्थे षष्ठी, अभिष्टय इति अस्त्यर्थो शब्दसङ्घातयोः अभिपूर्वः अस्त्यः प्रपूर्वस्येति योगविभागात्सम्प्रसारणं तादर्थ्ये चतुर्थी॥

य॒वो॑ऽसि य॒वय॒ास्मद्द्वेषो॑ य॒वयारा॑तीः॥६॥

हे यव यवोऽसि पृथक्करणोसि यतः। अस्मद्द्वेषः द्विषः अस्मदरातीश्च यवय परस्परभिन्नान् संहतिरहितान् कुरु तथा च यतस्त्वं

पृथक्कारी ततोऽस्मच्छत्रूनपि पृथक्कुर्वित्यर्थः द्विषः कृत्रिमशत्रवः अरातयः सहजशत्रवः । यव इति युमिश्रणामिश्रणे इत्यस्य पचाद्यच् अस्यैव यव इति रूपं, अरातिशब्दः स्त्रीलिङ्गोऽपि वेदे ॥

तिलोऽसि सोमदेवत्यो गोसवो देवनिर्मितः ॥
प्रत्नमद्भिः पृक्तः स्वधया पितॄँल्
लोकान् प्रीणाहि नः स्वाहा ॥ ७ ॥

तिलोऽसि पवित्रत्वेन प्रसिद्धोऽसि सोमो देवताअस्येति सोमदेवत्यः गोसवः गां स्वर्गं सूतेति गोसवः देवेन विष्णुना स्वयं निर्मितः । अद्भिः पृक्तः जलमिश्रितः यतस्त्वमेवं भूतः सर्वोत्कृष्टः अतः नः अस्माकं पितॄन् लोकान् पितृपितामहप्रपितामहादीनां प्रत्नं चिरकालं स्वधया स्वधाकारेण श्राद्धीयान्नेन वा प्रीणाहि प्रीतान् कुरु, स्वाहा सुहुतो भव ॥ (१)

या दिव्या आपः पयसा सम्बभूवुर्याऽआन्तरिक्षाऽ उतपार्थिवीर्य्या हिरण्यवर्णा यज्ञियास्ता न ऽआपः शिवाः शᳬस्योनाः सुहवा भवन्तु ॥८॥

ताः आपः नः अस्माकं शिवाः क्षेमा भवन्तु याः पयसा सम्बभूवुः पयसा क्षीरेण संयुक्ताः बभूवुः माधुर्यादिशीतत्वादिना एकीभूताइत्यर्थः या दिव्या दिवि स्वर्गे भवाः या अन्तरिक्षे भवाः उत

(१) अयं मन्त्रः कात्यायनमहर्षिप्रणीतनवकण्डिकाश्राद्धसूत्रमध्ये पठितः ॥

अपि च याः । पार्थिवीः पृथिव्यां भवाः ( १ ) आपः किं भूताः हिरण्यवर्णा हिरण्यं रजतं तत्समानवर्णाः, हिरण्यं रजतमित्युवटः, पुनः किं भूताः यज्ञियाः यज्ञार्हाः । ताः आपः अस्माकं शिवा क्षेमा भवन्तु न केवलं क्षेमाः । अपि तु शं कल्याण्यो भवन्तु, स्योनाः सुखदाश्च सुहवा सुष्ठु ब्राह्मणहस्ते हुता भवन्तु, स्योनं सुखनाम निरुक्ते ॥ ( २ )

पितृभ्यः स्थानमसि ॥ ६ ॥

हे पात्र पितृभ्यः पितॄणां स्थानमसि भवसि यतस्त्वं पितॄणां स्थानं भवसि अतः पितॄणां अवस्थानाय न्युब्जीकृतमित्यभिप्रायः आगतास्तत्र तिष्ठन्ति पितरः श्राद्धदेवताः इतिप्रमाणम् ॥ ( ३ )

अ॒ग्नये॑ क॒व्य॒वाह॑नाय॒ स्वाहा॑ ॥

अग्नये स्वाहा अग्नये किं भूताय कव्यवाहनाय कव्यं पितॄणामन्नं तत्पितृभ्यो वहति प्रापयंतीति कव्यवाहनः ॥

सोमा॑य पि॒तृम॑ते॒ स्वाहा॑ ॥

किं भूताय सोमाय पितृमते पितरस्तत्र सन्तीति पितृमान् तस्मै । मधु वातेति व्याख्यातं तर्पणे ।

पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखे अमृते अमृतं जुहोमि स्वाहा ॥ १० ॥

---

( १ ) पृथिव्यां भूता इति 'ख' पुस्तकपाठकः ।
( २ ) अयमपि श्राद्धसूत्रस्थो मन्त्रो ज्ञातव्य इति ।
( ३ ) अयमपि श्राद्धसूत्रस्थः ।

हे अन्नीकरणशेष अन्न ते तवाधारः पृथिवी विश्वाधारभूता द्यौः आकाशं अपिधानं आवरणं त्वां च ब्राह्मणस्य मुखे जुहोमि किं भूतं अमृतं हुतावशिष्टं मुखे किं भूते अमृते अनष्टे अभक्ष्यादिभिरदूषिते ऽन्यदपिहविः अदृश्यदर्शनोपहतं भवति ते पिधानं क्रियतइत्यर्थः। पृथिवी ते पात्रमित्यनेन भोजनपात्रमभिधीयते ब्राह्मणमुखस्याग्निसदृशत्वात्। जुहोमि इत्युक्तम्। (२)

इदं विष्णुर्विचक्रमे त्रेधा नि दधे

पदम्॥ समूढमस्य पांसुरे॥ ११॥

विष्णुर्भगवान् इदमन्नं विचक्रमे आक्रान्तवान् यः सः विष्णुः त्रेधा त्रिःप्रकारेण पदं चरणं निदधे निहितवान् पृथिव्यामाकाशे स्वर्गे च तेन च समूढमस्य पांसुले अस्य, विष्णोः पदं पांसुले धूलिमये प्रदेशे अर्थात् पृथिव्यां समूढं सम्यक् निविष्ट, तथा च विष्णुः। पृथिव्यां पदं निहितवान् अतस्तदुत्पन्नत्वेनान्नमप्याक्रान्तवानतो राक्षसास्तस्मादपसरन्त्विति वाक्यार्थः॥

अपहता ऽअसुरा रक्षांसि वेदिषदः॥१२॥

असुराः अपहता अपसारिताः सन्त्विति वाक्यार्थः। वेदिषदः वेदिः श्राद्धार्थे परिस्कृता भूमिः तत्र सीदन्ति इति वेदिषदः न केवलमसुराः किं तु रक्षांसि राक्षसाश्च अपसारिताः सन्तु। तथा च तिलप्रक्षेपेणासुरादयः श्राद्धस्थानादपसरन्त्विति वाक्यार्थः, गायत्री मधु वातेति व्याख्याता॥

(२) इयमृक् श्राद्धसूत्रीया।

येरूपाणि प्रति मुञ्चमानाऽ असुराः सन्तः स्वधया चरन्ति ॥ परापुरो निपुरो ये भरन्त्यग्निष्टाँल्लोकात्प्रणुदात्यस्मात् ॥ १३ ॥

उल्मुकं पुरस्तात्करोति (१) ये असुराः पितृरूपाणि आत्मनः प्रतिमुञ्चमानाः बध्नन्तः सन्तः प्रतिपूर्वो मुञ्चतिर्धारणे स्वधया पित्र्येणान्नेन हेतुभूतेन अस्माभिरेतत् खादितव्यमिति चरन्ति किं च परापुरः परा क्रान्ताः पुरः शरीराणि महान्ति निपुरः निकृष्टा पुरः सूक्ष्माणि शरीराणि ये भरन्ति बिभ्रन्ति धारयन्ति अतस्तानसुरान् अस्मात् लोकात्स्थानात् प्रणुदाति प्रेरयति, प्रतिपूर्वो मुचिर्बन्धनार्थः ।

अनग्निदग्धा ये जीवा येऽप्यदग्धाः
कुले मम ॥ भूमौ दत्तेन तृप्यन्तु
तृप्ता यान्तु परां गतिम् ॥ १४ ॥

अग्निदग्धाश्चेति पौराणिक. स्त्रीशूद्रकर्तृकश्राद्धे, येऽप्यदग्धेति विशेषस्तत्र अतः अनग्निदग्धेति निगदव्याख्यातम् ।

अत्र पितरो मादयध्वं यथाभागमावृषायध्वम् ॥

हे पितरः अत्र मादयध्वम् अत्र पिण्डे मदयुक्ता हर्षयुक्ता भवन्तु किं च यथाभागं स्वं स्वं भागं प्राप्य वृषायध्वम् वृषा इव बलिनो भवन्तु स्वेच्छया पिण्डोपभोगार्थं पितृणामभ्यर्थना इति वाक्यार्थः ।

(१) श्रौतसूत्रस्य ४ अध्यायस्यस्य प्रथमायां कण्डिकायाम् ।

अमी मदन्त पितरो यथा भागमावृषायिषत ॥१५॥

हे पितरः अमीमदन्त मद्दत्तेन पिण्डेनेति शेषः, तथा च मद्द त्तपिंडेन हर्षयुक्तभूताइत्यर्थः किं च आवृषायिषत मद्दत्ते पिण्डे स्वं स्वं भागं प्राप्य वृषाइव बलिनो जाताः पूर्वमन्त्रे अभ्यर्थना अस्मिन्मन्त्रे सिद्धार्थकथनमिति भेदः । नमो वइति तर्पणे व्याख्यातम् ॥

एतद्वः पितरो वासः ॥ १६ ॥

हे पितरः वः युष्मभ्यमेतद्वासआच्छादनं दीयत इति शेषः । ऊर्जं वहन्तीति व्याख्यातम् ॥

वाजे वाजेऽवत वाजिनो नो धनेषु विप्राऽ
अमृताऽ ऋतज्ञाः ॥ अस्य मध्वः पिबत
मादयध्वं तृप्ता यात पथिभिर्देवयानैः ॥१७॥

वाजिनः वाजमन्नमस्यास्तीति वाजी तथा च श्राद्धदत्तमन्नं पितॄणामस्ति इति पितर एव वाजिनउच्यन्ते हे वाजिनः पितरः यूयं अवत रक्षत कुत्र नः अस्माकं वाजे वाजे अन्ने अन्ने तथा च यत्कृतमकृतं चान्नं श्राद्धार्थमुपकल्पितं तत्र सर्वत्र न केवलं तत्र किं तु धनेष्वपि द्रव्येष्वपि यूयं किं भूताः विप्रा विप्रमूर्त्तयः किं भूता अमृता अमृतधर्माणः पुनः किं भूताः ऋतज्ञाः सत्यज्ञान-शालिनः रक्षित्वाच अस्मानस्य मध्वः मधूनि रसान् पिबत यद्वा एतत्सम्बन्धिनो मध्वः मधुनः रसं पिबत पीत्वा च मादयध्वं तृप्यध्वं तृप्ताः सन्तः पथिभिर्वर्त्मभिर्यात गच्छत कैर्देवयानैः देवानां यानं दत्तं तैरित्यर्थः अत्र तृप्ताः सन्तः स्वर्गं गच्छतेति वाक्यार्थः ॥

आ मा वाजस्य प्रसवो जगम्यादेमे द्यावा-
पृथिवी विश्वरूपे ॥ आ मा गन्तां पितरा
मातरा चामा सोमोऽअमृतत्वेन गम्यात् ॥१८॥

वाजस्यान्नस्य प्रसवः फलं मा मां आजगम्यात् आगच्छतु अस्मिन् श्राद्धे कृतस्यान्नदानस्य फलं मां पुनः पुनरागच्छत्वित्यर्थः, किं च इमे द्यावापृथिवी द्यावापृथिव्यौ मा मां आजगम्येतां आगच्छतां द्यावापृथिवी किं भूते विश्वरूपे विश्वं सर्वं रूपं ययोस्ते विश्वरूपे एतेन पृथिवीस्वर्गसम्बन्धिकल्याणं ममागच्छत्वित्याशास्ते, किं च हे पितरा मातरा च हे पितः मातर्युवां आगन्तां आगच्छन्तं तथा च यदा यदा अहं श्राद्धं करोमि तदा तदा मातापितरौ आगच्छतामिति प्रार्थना, किं च पितृणां राजा सोमः मा मां आगम्यात् आगच्छतु किमर्थम् अमृतत्वेन अमृतत्वाय मोक्षाय तथा चानेनानुव्रजनेन मम श्राद्धफलं पार्थिवसुखं स्वर्गश्च भवतु श्राद्धसमये मातापितरौ ममागच्छतां मोक्षश्चभवत्वित्याशंसावाक्यार्थः । अथ सपिण्डनमन्त्रव्याख्यानम् ॥

ये समानाः समनसः पितरो
यमराज्ये ॥ तेषाँ लोकः स्वधा
नमो यज्ञो देवेषु कल्पताम् ॥ १ ॥

तेषां पितृणां लोकः स्थानं एतस्मै प्रेताय पित्रे स्वधा भवतु किं च नमो यज्ञः नमस्कारकृतो यज्ञः देवेषु पुरूरवोमार्द्रवप्रभृतिषु

कल्पतां क्लृप्तो भवतु दैवश्राद्धं भवत्विति यावत्, तथाऽनेन सपिण्डनकर्मणा प्रेतस्य पितृलोकप्राप्तिः पार्वणश्राद्धाधिकारश्च भवत्विति वाक्यार्थः, तेषां पितरः पितामहादयः समानाः सपिण्डनेन समानाः समानलोकं गताः, अतएव समनसः समानहृदयाः यमराज्ये यमाधिकारे स्थिताः ॥

ये समानाः समनसो जीवा जीवेषु
मामकाः ॥ तेषाᳫं श्रीर्मयि कल्प-
तामस्मिँल्लोके शतᳫं समाः ॥ २ ॥

तेषां प्रसादेनेऽत्यध्याहार्य्यं तेन तेषां पितॄणां प्रसादेन मयि श्रीर्लक्ष्मीः कल्पतां भवतु अस्मिन् लोके इहैव जन्मनीत्यर्थः कियन्तं कालं शतं समाः शतवर्षाणि तथा चानेन कर्मणा पितृप्रसादेन मम शतं वर्षाणि लक्ष्मीर्भवत्विति वाक्यार्थः, ते के पितरः समानाः समनस इति पदद्वयं व्याख्यातम्, ये जीवेषु सूक्ष्मशरीराधिष्ठानेन कर्मणा भोक्तृषु मध्ये तत्सम्बन्धिनो जीवाः सूक्ष्मशरीरावच्छिन्नकर्मभोक्तारः ते अन्यत्पार्वणवत् सर्वं समानम् । अथ वृद्धिश्राद्धमन्त्रव्याख्या । अत्र यवोऽसि पितृदैवत्यः स्वधास्थाने पुष्यान् नान्दी मुखानिति विशेषः । तथा च पुष्यान्नान्दीमुखान् पितॄन् प्रीणयेति योजना अन्यत्सर्वं पार्वणसमानम् । अथ श्राद्धीयसूक्तमन्त्रव्याख्यानम् ॥

कृणुष्व पाजः प्रसितिन्न पृथ्वीं याहि
राजेवामवाँ २ऽ इभेन ॥ तृष्वीमनु प्रसितिं
द्रूणानोऽस्तासि विध्य रक्षसस्तपिष्ठैः ॥ १ ॥

हे अग्ने पाजः बलं कृणुष्व कुरु पाजशब्दो बलनामसु पठितः किमिव प्रसितिं न पृथ्वीं पृथ्वीं प्रसितिं वागुरामिव यद्वा पृथु जालमिव नकारउपमार्थीयः ततो याहि अर्थाच्छत्रून् प्रतीति शेषः कइव आमवान् अमात्यवान् राजेव यद्वा आमवान् अमात्यवान् भूत्वा राजेव याहीत्यन्वयः यद्वा गृहवान् भूत्वा आमशब्दो गृह वचनः केन इभेन इभभवेन बलेन यद्वा इभेन हस्तिना गत्वा चानुपश्वात् तृष्वीं तृष्व्या क्षिप्रया प्रसितिं प्रसित्या वागुरया जालेन वा द्रुणानः हिंसमानः अस्तासि क्षेप्तासि शत्रूणामितिशेषः अतो ब्रवीमि तपिष्ठैः अतिशयेन क्लेशकरैः प्रहारैरक्षसः राक्षसान् विध्य ताडय ॥

तव॑ भ्र॒मास॑ आशु॒या प॑तन्त्यनु॑ स्पृश

धृष॒ता शोशु॑चानः ॥ तपूं॑ष्यग्ने जु॒ह्वा पत॒-

ङ्गानस॑न्दितो॒ विसृ॑ज॒ विष्व॑गुल्काः ॥ २ ॥

हे अग्ने ये ते भ्रमासः भ्रमाणाः वातोद्धूताः अर्थात् ज्वाला समूहाः पतन्ति इतस्ततो गच्छन्ति तैः तपूंषि तापयितॄन् अर्थाद्र क्षांसि अनुस्पृश अभिस्पृश ज्वालासमूहाः किं भूता आशुयाः आशवो जवनाः त्वं किं भूतः धृषता धृष्टेन ज्वालासमूहेन शो शुचानः दीप्यमानः किं च पतङ्गान् रक्षांसि लक्षीकृत्य असन्दितः अनवखण्डितः सन विश्वक सर्वतः जुह्वा सह उल्काः विसृज क्षिप्रं पतद्गमनानि येषां तान् पतङ्गान् असन्दित इति दोअवखण्डन इत्यस्य रूपम्, तथा च रक्षोऽभिघातं कुर्वित्यर्थः ॥

ओं प्रति॑स्पशो॒ विसृ॑ज॒ तूर्णि॑तमो॒ भवा॑ पा॒युर्वि॒शो

ऽअ॒स्या ऽअद॑ब्धः ॥ यो नो॑ दू॒रे अ॒घश॑ꣳसो॒ यो

ऽअन्त्य॑ग्ने॒ माकि॑ष्टे॒ व्यथि॒राद॑धर्षीत् ॥ ३ ॥

नः अस्माकं यः अघशंसः पापकीर्त्तनं दुर्जन अन्ति अन्तिके यश्च दूरे तिष्ठति हे अग्ने तं प्रतिस्पशः प्रणिधानबन्धनात विसृज प्रेरय तूर्णितमो भव अतिशयेन तूर्णो भव किं च अस्याः मदीयायाः विशः जनपदजातेः पायुः पालयिता भव अदब्धः अनुपहिंस्यः एवं च हे अग्ने ते तव माकिः मा कश्चित् व्यथि व्यथयिता शत्रुराद-धर्षीत् धर्षणी भवत ॥

ओं उद॑ग्ने तिष्ठ॒ प्रत्यात॑नुष्व॒ न्य॑मित्रा॑ꣳ ऽओषता-

त्तिग्महेते ॥ यो नो॒ ऽअरा॑तिꣳ समिधान॒ चक्रे॒

नी॒चा तं ध॑क्ष्यत॒सं न शुष्क॑म् ॥ ४ ॥

हे अग्ने उत्तिष्ठ किं च प्रत्यातनुष्व अर्थात् ज्वालासमूहान् किं च हे तिग्महेते अमित्रान् निः ओषतान्निर्दह 'उषदाहे तस्य रूपं तिग्महेतइति तिग्मं तीक्ष्णं हेतिर्ज्वाला आयुधं वा यस्य स तथोक्तः किं च यः न अस्मभ्यं दानप्रवृत्तं अरातिं अदानं चक्रे अश्रद्धयादिना निवारय त हे समिधान समिध्यमान तं नीचं नीचैः कृत्वा धक्षि दह 'दहभस्मीकरणे' कमिव शुष्कं अतसमिव वृक्षमिव नकारउपमार्थीयः, अरातिमिति रादानइत्यस्य रूपम् ॥

ऊर्ध्वो भ॑व॒ प्रति॑ वि॒ध्याध्य॒स्मदा॒विष्कृ॑णुष्व॒ दैव्या॑न्यग्ने ॥ अव॑स्थि॒रा त॑नुहि यातु॒जूनां॑ जा॒मिमजा॑मिं॒ प्र मृ॑णीहि॒ शत्रू॑न् ॥ ५ ॥

हे अग्ने ऊर्ध्वो भव ऊर्ध्वस्तिष्ठ स्थित्वा च अस्मत् अधि मम उपरि स्थितान् प्रति विध्य प्रति ताडय किं च आविः कृणुष्व दैव्यान्यग्ने दैव्यानि च शरीरादीनि अवतनुहि नियमय तथा च यातुधानानां सर्वाण्येवास्थिराणि भवन्तु किं च शत्रून् जामिं पुनरुक्तं अजामिं अपुनरुक्तं कृत्वा प्रमृणीहि पुनः पुनर्मारयेत्यर्थः जामिशब्दः पुनरुक्तवचनः, उदीरितामङ्गिरसो नइति मन्त्रद्वयं तर्पणे व्याख्यातम् ।

ये नः॒ पूर्वे॑ पि॒तरः॑ सो॒म्यासो॑ऽनूहि॒रे सो॑म पी॒थं वसि॑ष्ठाः ॥ तेभि॑र्य॒मः स॑ᳪररा॒णो ह॒वीᳪष्यु॒शन्नु॒शद्भिः॑ प्रतिका॒मम॑त्तु ॥ १ ॥

नः अस्माकं ये पूर्वे पितरः सोम्यासः सोमयज्ञसम्पादिनः सोमपीथं सोमपानं अनूहिरे अनुप्रापितवन्तः अर्थात् देवान् 'वह प्रापणे लिट्' ते किं भूता वसिष्ठाः वसिष्ठस्य बहून्यपत्यानि वासिष्ठाः तेभिः तैः सरराणः यमः हवींषि अत्तु भक्षयतु यमः किं भूतः उशन् कामयमानः 'वशकान्तौ' पितृभिः किं भूतैः उशद्भिः कामयमानैः, अतएव प्रतिकामं यथाकाममत्तु ।

त्वꣳ सो॑म॒ प्रचि॑कितो मनी॒षा त्वꣳ रजि॑ष्ठ॒मनु॑ नेषि॒ पन्था॑म् ॥ तव॒ प्रणी॑ती पि॒तरो॑ न इन्दो दे॒वेषु॒ रत्न॑मभजन्त॒ धीरा॑: ॥ २ ॥

हे सोम प्रचिकितः चिकित्वान् प्रकृष्टचैतन्ययुक्त त्वं मनीषा यज्ञानां मनस इच्छा तया युक्तो भवसि यद्वा हे सोम त्वं प्रचिकितः प्रकृष्टज्ञातासि 'चितीसंज्ञाने' याच ते मनीषा बुद्धिः तया रजिष्ठं ऋजुतमं पन्थां पन्थानं देवयानाख्यं अनुनेषि अनुगमयसि किं च तव प्रणीती प्रणयेन तवाभ्यनुज्ञानेन हे इन्दो नः अस्माकं पितरः कर्म कृत्वा देवेषु मध्ये रत्नं रमणीयं यज्ञफलं अभजन्त भुक्तवन्तः पितरः किं भूताः धीरा धीमन्तः ॥

त्वया॒ हि नः॑ पि॒तरः॑ सोम॒ पूर्वे॒ कर्मा॑णि च॒क्रुः पव॑मान॒ धीरा॑: ॥ व॒न्वन्नवा॑तः परि॒धीँ॑ रपो॑र्णु वी॒रेभि॒रश्वै॑र्म॒घवा॑ भवा नः ॥३॥

हे सोम हि यस्मात्त्वया आश्रयभूतेन नः अस्माकं पूर्वे पूर्वजाः पितरः कर्माणि चक्रुः कृतवन्तः हे पवमान पावनार्द्द पावनहेतो तस्मात्त्वामिदं प्रार्थये वन्वन् भजमानः सन् अस्मदीयानि तानि कर्माणीति शेषः, परिधीन् यज्ञोपद्रवकारिणः अपोर्णु अपगमय त्वं किं भूतः अवातः वाताद्युपद्रवशून्यः सन्नित्यर्थः वीरेभिः वीरैः रश्वैः सह किं च नोऽस्माकं मघवा भव धनवान्भव । भवेत्यस्य संहितायां दीर्घं, मघं धनं देहीति यावत् । यो यस्य ददाति स तस्य धनवानित्यभिप्रायः पितरः किं भूताः धीराः धीमन्तः ॥

ओं त्वᳬं सोम पितृभिः संविदानोऽनु द्यावापृथिवी ऽआततन्थ ॥ तस्मै तऽइन्दो हविषा विधेम व्वयᳬं स्याम पतयो रयीणाम् ॥ ४ ॥

हे सोम यस्त्वं पितृभिः सविदान संवादं कुर्वाणः द्यावापृथिवी आततन्थ आतनोषि 'तनुविस्तारे' हे इन्दो तस्मै ते हविषा विधेम हविर्दद्मः वयं च हविः प्रदानानन्तरं रयोणां धनानां पतयः स्याम भवेम, सोमवतां पितृणां षड्ऋचम् ।

ओं बर्हिषदः पितरऽऊत्यर्वागिमा वो हव्या चकृमा जुषध्वम् ॥ तऽआगतावसा शन्तमेनाथा नः शंयोररपो दधात ॥ ५ ॥

हे बर्हिषदः पितरः बर्हिषि सीदन्तीति बर्हिषदः बर्हिर्यज्ञभागिनो वा ऊत्या गत्या अर्वाक् अर्वाचं आगच्छतेति शेष, किमर्थं इमानि वो युष्माकं हव्यानि हवींषि वयंचकृम कृतवन्तः तानि च आजुषध्वं यैश्च युष्माभिः अधस्तनानि हवींषि सेवितानि ते यूयं पुनरपि आहूयमाना आगता आगच्छत शन्तमेन सुखयितृतमेन अवसा अन्नेन हविर्लक्षणेन हेतुभूतेन परितुष्टाः यज्ञसमाप्त्युत्तरकाल अस्माकं शंयो दधातु शमनं रोगाणां यापनं च भयानां शंयोरिति पदद्वयमुक्तमित्युवटः, अन्यदपि यत्किञ्चिदऽप्यरपः अपापं तदस्माकं दधातु ।

ओं आऽहं पितॄन्त्सु विदत्राँ ।ऽ२॥ अवित्सि नपातं च व्विक्रमणं च व्विष्णोः ॥ बर्हिषदो ये स्वधया सुतस्य भजन्त पित्वस्तऽइहागमिष्ठाः ॥ ६ ॥

अहं पितॄन् आ अविक्षि अवेदिषंवि दितवान् पितॄन् किं भूतान सुविदत्रान् विष्णोर्यज्ञस्य नपात च विक्रमणं च विदितवान् अस्ति न पातो यस्मिन् गतानां स नपात. देवयानः पन्था विविधं क्रमणं यत्र स विक्रमणः पितृयानः पन्था तत्त्वव्दघटीवदुत्तराधरं प्राणिनो गच्छन्ति तथा च देवयानपितृयानपन्थानौ यज्ञसम्बन्धिनौ अवेदिषं तद्वासिनः पितॄन् अतोऽहमेवं ब्रवीमि ये वर्हिषदः पितरः स्वधया अन्नेन सह सवलीयलक्षणेन सुतस्याभिषुतस्य कर्मणः पित्वः पानं सोमपानमिति यावत् तत् भजन्त भजन्ते सेवन्ते ते इह कर्मणि आगमिष्ठाः आगच्छन्तु ॥

ओंउपहूताः पितरः सोम्यासो वर्हिष्येषु
४
निधिषु प्रियेषु ॥ तऽआगमन्तु तऽइह
श्रुवन्त्वधिब्रुवन्तु तेऽवन्त्वस्मान् ॥ ७ ॥
४

पितरः सोम्यासः सोमसम्बन्धिनः वर्हिष्येषु निधिषु प्रियेषु वर्हिविशेषेषु वर्हिर्विशेषनिमित्तं उपहूताः आहूताः ते पितरः इह आगमन्तु आगच्छन्तु वर्हिष्येषु वर्हिषि आसादितेषु वा निधिषु निहितेषु प्रियेषु पितॄणां अभिरुचितेषु आगत्य च ते इह श्रुवन्तु शृण्वन्तु मदीयानि वचांसि श्रुत्वा चाधिब्रुवन्तु श्लाघयन्तु यद्वा पुत्रेषु पितॄणां यद्वक्तव्यम्भवति तद्वदन्तु किं च ते अस्मान् अवन्तु रक्षन्तु । आयन्तुन । इति श्राद्धप्रकरणे व्याख्यातम् ॥

ओ३म् अग्निष्वात्ताः पितरऽएह गच्छत सदः सदः सदत सुप्रणीतयः ॥ अत्ता हवींषि प्रयतानि बर्हिष्यथा रयिं सर्ववीरं दधातन ॥ ८ ॥

आ इह एह हे अग्निष्वात्ताः पितर इह आगच्छत आगत्य च सदः सदः गृहं गृहं प्रति सदत उपविशत ततः सुप्रणीतयः सुप्रणयनाः सुखोपविष्टाः सन्तः हवींषि अत्तेति संहितायां दीर्घः भक्षयत हवींषि किं भूतानि प्रयतानि शुचीनि पुनः किं भूतानि बर्हिषि सादितानि इति शेषः, अथ तृप्ताः सन्तः सर्ववीरं रयिं धनं दधातन निधेहि सर्वे वीरा यस्मात्तत्सर्ववीरम् ॥

ओ३म् ये अग्निष्वात्ता येऽ अनग्निष्वात्ता मध्ये दिवः स्वधया मादयन्ते ॥ तेभ्यः स्वराडसुनीतिमेतां यथावशं तन्वं कल्पयाति ॥ ९ ॥

४

ये पितरः अग्निष्वात्ताः अग्निनास्तु आत्ताः ये च अनग्निष्वात्ताः श्मशानकर्म न प्राप्ताः मध्ये दिवः द्युलोकस्य मध्ये स्वधया स्वकर्मफलोपभोगेन मादयन्ते सुखं सेवन्ते तेभ्यः तेषां स्वराट्परमेश्वरः एतां एनां असुनीतिं यमं सहायं कृत्वा यथावशं यथाकामं यथारुचि तनुं शरीरं कल्पयतु तथा च परमेश्वरः यमं सहायं कृत्वा तेषां पितॄणां शरीरं कल्पयति इति वाक्यार्थः, स्वराट् स्वेनैव राजत इति अकृतकैश्वर्यः असुनीतिं असून् प्राणान् नयतीति असुनीतिर्यमः ॥

ओं अग्निष्वात्तान्तृतुमतो हवामहे नाराशंꣳसे सोमपीथं य आशुः ॥ ते नो विप्रासः सुहवा भवन्तु वयꣳ स्याम पतयो रयीणाम् ॥ १० ॥

अग्निष्वात्तान् पितॄन् ऋतुमतः ऋतुसंयुक्तान् हवामहे आह्वयामः कान् इत्याह ये नाराशंसे चमसे सोमपीथं सोमपानं आशुः प्राप्नुयुः श्रुतिं चमसे पितॄणां भक्ष्य' श्रूयते पितृभ्यो नाराशंसेभ्यः इत्यत्र ते च आह्वयमानाः नः अस्माकं सुहवाः स्वाह्वयमानाः भवन्तु ते किं भूताः विप्रासः मेधाविनः एवं कृते वयं रयीणां धनानां पतयः स्याम भवेमः ॥

ओं आच्या जानु दक्षिणतो निषद्येमं यज्ञ मभिगृणीत विश्वे ॥ मा हिꣳसिष्ट पितरः केन चिन्नो यद्व आगः पुरुषता कराम ॥ ११ ॥

हे विश्वे हे पितरः जानु अर्थात् सव्यं आच्य पातयित्वा दक्षिणतो निषद्य दक्षिणतोऽवस्थानं कृत्वा अयं च स्वभावनिर्देशः पितॄणां एवं स्वभावाः पितरो भवन्ति अथैनं पितरः प्राचीनावीतिनः सव्यं जान्वाच्यासीदन्निति श्रुतेः । इमं मदीयं यज्ञं श्राद्धं अभिगृणीत अभिष्टुत दक्षिणामन्त्रकालकर्तृहविर्यजमानोत्कर्षैः साध्वयं यज्ञ इति प्रकारेणेति शेषः, विश्वे सर्वे सोमवन्तो बर्हिषदोऽग्निष्वात्ताश्चेत्यर्थः, किं च हे पितरः केन चिदपि नः अस्माकं हिंसिष्ट मा नाशयन्तु यत् यद्यपि वः युष्माकं आगः

अपराधं पुरुषता पुरुषतया हेतुभूतया कराम कृतवन्तः तथाऽपि माहिंसिष्टेत्यर्थः, पुरुषास्वलचित्ता भवन्तीत्यभिप्रायः ॥

आसीनासो अरुणीनामुपस्थे रयिं धत्त
दाशुषे मर्त्याय ॥ पुत्रेभ्य+पितरस्तस्य
वस्वः प्रयच्छत तऽइहोर्ज्जं दधात ॥ १२ ॥

हे पितरः ये यूयं अरुणीनां अरुणानां ऊर्णानां अर्थात् कुतपानां उपस्थे मध्ये आसीना उपविष्टास्थ अरुणा हि ता ऊर्णा-भवन्ति याभिः कुतपाः क्रियन्ते यद्वाऽरुणवर्णानां सूर्यकिरणानां सूर्यलोकस्थाइत्यर्थः, ते यूयं मर्त्याय मनुष्याय दाशुषे दत्तवते अर्थाद्धवींषि यजमानायेति यावत् रयिं धनं धत्त किं च तस्य तेभ्यः वस्वः वसूनि प्रयच्छत अयं यजमानार्थं पुत्रग्रहणं तथा च आज्ञ-कारिभ्योऽपि पुत्रेभ्यो वसु दत्तेत्यभिप्रायः किं च ते यूयं इहास्मदीये यज्ञे ऊर्ज्जं अन्नं बलं वा दधात स्थापयत ॥

ओंयमग्ने कव्यवाहन त्वं चिन्मन्यसे
रयिम् ॥ तन्नो गीर्भिः श्रवाय्यं
देवत्रापनया युजम् ॥ १५ ॥

हे अग्ने कव्यवाहन कव्यं वहतीति कव्यवाहनः यं रयिं हवि-र्लक्षणं धनं त्वं चित् त्वमपि मन्यसे अवगच्छसि अनेन श्रेयः प्राप्तुं शक्यते इत्यनेन प्रकारेणेति शेषः तद्धविर्लक्षणं रयिं नः अस्मदीयं प्रभूतवाग्भिः पुरोऽनुवाक्यायाज्यावषट्कारलक्षणाभिः देवत्रा दे-

वेभ्यः पनय देहि हविः किं भूतं अवाय्यं अयणीयं युजं यथा युक्तं यथायोग्यमित्यर्थः 'पनतिर्दानकर्मा' ॥

ओं॒यो॑ऽ अ॒ग्निः, कव्य॒वाह॑नः पि॒तॄन्
य॒क्ष॑दृ॒ता॒वृध॑ः ॥ प्रेदु॑ ह॒व्यानि॑ वोचति
दे॒वेभ्य॑श्च पि॒तृभ्य॒ऽआ ॥ १६ ॥

यः अग्निः कव्यवाहनः कव्यं पितॄणामन्नं उद्वोढा पितॄन् यक्षत् इष्टवान् सः इदानीं प्रेदुहव्यानि इत् इमानि हव्यानि हवींषि देवेभ्यः पितृभ्यश्च प्रवोचति प्रब्रवीतु पितृन् किं भूतान् ऋतावृधः सत्यवर्धयितॄन् यज्ञवृधो वा, आकारः समुच्चयार्थः ॥

ओंत्वमग्नऽईडि॒तः कव्य॒वाह॒नावा॑ड्ढ॒व्यानि॑
सु॒रभी॑णि कृ॒त्वो ॥ प्रादा॑ः पि॒तृभ्य॑ः स्व॒धया॑
ते ऽअक्ष॑न्न॒द्धि त्वं दे॑व॒ प्रय॑ता ह॒वींष॑षि ॥ १७ ॥

अग्ने कव्यवाहन यस्त्वं ईडितः याचितो वा हव्यानि हवींषि अवाट् ऊढवानसि किं कृत्वा सुरभीणि कृत्वा ऊढ्वा च तानि हवींषि पितृभ्यः प्रसादात् प्रादाः दत्तवानसि ते च पितरः स्वधया पितृमन्त्रेण अक्षत् अन्नमदन्तः भक्षितवन्तः हे देव त्वमपि प्रयता प्रयतानि हवींषि अद्धि भक्षस्व । ये चेह पितरो ये च इत्यादि तर्प्पणे व्याख्यातम् ॥

ओंइदं पितृभ्यो नमो ऽ अस्त्वद्य ये पूर्वासो
यऽउपरास ईयुः ॥ ये पार्थिवे रजस्या
निषत्ता ये वा नूनꣳ सुवृजनासु विक्षु ॥१८॥

इदं हविर्लक्षणमन्नं ऽअद्य अद्यतनं तेभ्यः पितृभ्यः नमोऽस्तु ये पूर्वासः पूर्वं ईयुः अर्थात् स्वर्गं ये च उपरासः कृतकृत्याः अोत्परं ब्रह्म ईयुः याता ये च पार्थिवे रजसि निषत्ता. पार्थिवं पृथिव्यां भवं रजः अग्निः तत्रापि मुख्येन निषण्णा अग्निलोकं प्राप्ताइत्यर्थः, ये च नूनं निश्चयेन सुवृजना. सुसाधुवल्लभा सुविक्षु यजमानलक्षणासु प्रजासु निषण्णास्तेभ्यः ।

ओंअधा यथा नः पितरः परासः प्रत्नासो ऽ
अग्नऽऋतमाशुषाणाः ॥ शुचीदयन्दीधिति-
मुक्थशासः क्षामाभिन्दन्तो ऽअरुणीरपव्रन् ॥

अधा अथा एवं सहेति हे अग्ने यथा नः पितरः शुचि शुचिं इत् एवकारार्थे शुचिमेव भास्वरामेव दीधितिं अयन् आगताः प्राप्ता दीधितं आदित्यरश्मिं आदित्यमण्डलमिति यावत् यतः एष देवयानः पन्थाः पूर्वं हे अग्ने त्वत्प्रसादात् क्षामा पृथिवीं भिन्दन्तः वेदिचषालयूपावटादिखननैः यद्वा पृथिव्याश्रयाणि व्रीहिपशुयूपादीनि भिन्दन्तः यज्ञसर्वोपकरणानि अनुतिष्ठन्तइत्यर्थः अरुणीः अरोचमानाः दीधितिः रश्मीन् अर्थादादित्यस्य अपव्रन् अपवृणुमः आच्छाद्य अपवृत्य च देवपन्थानमनुतिष्ठामीति वाक्यार्थः, पितरः

किं भूताः परासः उत्कृष्टाः प्रत्नासः पुराणाः ऋतमासुषाणाः। ऋतं यज्ञं आशुषाणाः आप्नुवन्तः उक्थशासः उक्थानि ये शसन्ति ते उक्थशासः उक्थः सामविशेषः। उशन्तस्त्वेति श्राद्धे व्याख्यातम्॥

इति महामहोपाध्यायशत्रुघ्नकृतायां मन्त्रार्थप्रदीपिकायां श्राद्धमन्त्रपरिच्छेदः। अथ षडङ्गशतरुद्रियं व्याख्यायते।

सहस्तोमाः सहछन्दसऽआवृतः सहप्रमाऽ
ऋषयः सप्त दैव्याः॥ पूर्वेषां पन्थामनुदृश्य
धीराऽअन्वालेभिरे रथ्यो न रश्मीन्॥ १॥

अयं मन्त्रः काचित्कऋषिसृष्टिप्रतिपादकस्त्रिष्टुप् सप्त ऋषयः भारद्वाजविश्वामित्रकश्यपगौतमात्रिजमदग्निवसिष्ठाः पूर्वेषां कल्पान्तराधिकारिणां पन्था पन्थानं अनुदृश्य अवलोक्य अन्वालेभिरे अन्वारभन्तः सृष्टिं कृतवन्तः ऋषयः किं भूताः सहस्तोमाः स्तोमसहिताः कारणस्तोमसहिताः (१) सह छन्दसः छन्दः सहिताआवृतः सहावृत्तऽआवृच्छब्देनकर्मोच्यते श्रद्धासत्यप्रधानानां कर्म्मणामनुष्ठातारइत्यर्थः सहप्रमाः प्रमाणं प्रमा प्रमाणपरीक्षका धीरा धीमन्तः इत्यर्थः, दैव्याः प्रजापतित्वेन प्राणाभिमानिनः कथमित्यन्वारेभिरे रथ्यो रश्मीन् रथे साधुः रथ्यः सारथिः नकारउपमार्थीयः तथा च यथा सारथिः इष्टदेशप्राप्त्यर्थं अश्वनियमनाय

(१) सह छन्दसइत्यत्र तुगागमो न भवति कुतः यस्मात् छायसहेति न, इतिप्रातिशाख्यसूत्रेण निषेधात्।

रश्मीन् प्रग्रहान् आलभते एवं तेऽपि स्वष्टियज्ञं स्पष्टवन्तः इत्यर्थः॥

गणानां त्वा इति देवपूजाप्रकरणे व्याख्यातः। ततः शिवसंकल्पव्याख्या॥

यज्जाग्रतो दूरमुदैति दैवं तदु सुप्तस्य तथैवैति॥ दूरङ्गमं ज्योतिषां ज्योतिरेकं तन्मे मनः शिवसङ्कल्पमस्तु॥ २॥

तन्मनः मे मम शिवसङ्कल्पमस्तु शिवः संकल्पोऽभिलाषो यस्य तत् शिवसङ्कल्पं तत्किं यत् जाग्रतः पुरुषस्य दूरं उदैति दूरं गच्छति नाना विषयेषु सञ्चरतामिन्द्रियाणां सहकारित्वेनेतस्ततः संचारत्वादित्यभिप्रायः उ अप्यर्थे तन्मनः सुप्तस्य तथैव एति स्वल्पविषयमपि भवति इन्द्रियप्रसाराभावात् मनः किं भूतं ज्योतिषामिन्द्रयाणां मध्ये एकं अद्वितीयं ज्योतिः इन्द्रियमुख्यमित्यर्थः, तदधीनत्वात्सर्वकार्याणामिति भावः, दूरं गमं इन्द्रियाणां मध्ये दूरगन्तृव्यवहिताव्यवहितविषयसाधारणत्वादित्यर्थः॥

येन कर्म्माण्यपसो मनीषिणो यज्ञे कृण्वन्ति विदथेषु धीराः॥ यदपूर्वं यक्षमन्तः प्रजानां तन्मे मनः शिवसङ्कल्पमस्तु॥ ३॥

येन मनसा अपसः अपस्विनः (१) कर्मिणो मनीषिणो यज्ञे

(१) अस्मायामेधास्रजो विनिरिति विन्प्रत्ययः। विन्मतोर्लुगिती छाभावेऽपि छान्दसो विनो लुक्। सदा कर्म्मनिष्ठाइत्यर्थः॥

कर्माणि कुर्वन्ति कुर्व्वन्ति 'अपसदृति कर्मनाम' मनोषिण. किं भूता: विदथेषु (१) यज्ञेषु यज्ञसाधनज्ञानेषु वा धीरा: पण्डिता:, मन: किं भूत अपूर्वं न विद्यते पूर्वकारणं यस्य नित्यमित्यर्थ:, अद्भुतं वा पुन. किं भूत यक्षं (२) पूज्यं भोक्तृ वा प्रजानां अन्त: अन्तर्वर्त्ति, तन्मे मन इति व्याख्यातम् । ३ ॥

यत्प्रज्ञानमुत चेतो धृतिश्च यज्ज्योतिरन्तरमृतं प्रजासु ॥ यस्मान्नऽऋते किं चन कर्म्म क्रियते तन्मे मन:+शिवसंकल्पमस्तु ॥ ३ ॥

यन्मन: प्रज्ञानं प्रकृष्टं ज्ञानं यस्मात्तत् उत समुच्चये यत् चेत: (३) चित् चेतनाया: उपलब्धे हेतु: धृतिश्च यत् प्रजासु अन्त: हृदये अमृतञ्ज्योति: सुखहेतूनां प्रकाशकं यस्मात् (४) विना किं च न कर्म न क्रियते केनापीति शेष:, तन्मे मन: शिवं इति व्याख्यातम् ।

---

(१) वेत्ते रौणादिकोऽथप्रत्ययः । प्रत्ययोदात्तत्वेन मध्योदात्तं पदम्, प्रत्यय, परश्च, आद्युदात्तश्चेति पाणिन्युक्तेः ॥

(२) यष्टुं यक्षं यजतेर्धातोरौणादिकः सन्प्रत्ययः, यज्नित्यादिनित्यमित्याद्युदात्तं पदम् ॥

(३) चिती सञ्ज्ञाने अस्माद्धातोर्ण्यन्तादसुन्प्रत्ययः । सामान्यविशेषज्ञानजनकमित्यर्थः । उक्तमपि पुनरुच्यते आदरार्थम् । आदरार्थं भूयासमर्थं मन्यन्त इति निरुक्तकारयास्कोक्तेः ।

(४) अन्यारादितरर्ते इति पाणिनिसूत्राद्दतस्य योगे पञ्चमी ।

येनदं भूतं भुवनं भविष्यत्परिगृहीतममृतं न सर्व्वम् ॥ येन यज्ञस्तायते सप्त होता तन्मे मनः शिव० ॥ ४ ॥

येन इदं विद्यमानं भूतं अतीतं भविष्यत् भावि सर्वं भुवनं परिगृहीतं आक्रान्तं येन किं भूतेन अमृतेन नित्येन सुखहेतुना वा येन च सप्त होता अग्निष्टोमस्तायते विस्तार्यते येन तन्मे मनः शिवसङ्कल्पमस्तु ॥ ४ ॥

यस्मिन्नृचः साम यजूंषि यस्मिन्प्रतिष्ठिता रथनाभाविवाराः ॥ यस्मिंश्चित्तं सर्वमोतं प्रजानां तन्मे मनः शिवसङ्कल्पमस्तु ॥ ५ ॥

यस्मिन् ऋचः ऋग्वेदः सामवेदः यजूंषि यजुर्वेदः सर्वे: सर्ववेदाः प्रतिष्ठिताः आश्रिताः कुत्र कइव रथनाभौ रथमध्ये आराइव यस्मिंश्च प्रजानां सर्वं चित्तं ज्ञानमोतं संबद्धं तन्मे मन इति ॥ ५ ॥

सुषारथिरश्वानिव यन्मनुष्यान्नेनीयते भीशुभिर्वाजिनइव ॥ हृत्प्रतिष्ठं यदजिरं यविष्ठं तन्मे मनः शि० ॥ ६ ॥

मनुष्यान्नेनीयते हिताहितविषये प्रवर्त्तयति निवर्त्तयति च कइव सुषारथिः सुष्ठु हयारोहः अभीशुभीरश्मिभिरश्वानिव प्रयोक्तृसारथिः अश्वान् हिताहितविषये प्रवर्त्तयति निवर्त्तयति च अश्वान् किं भूतान् वाजिनः वेगशालिनः मनः किं भूतं हृत्प्रतिष्ठं

हृदि प्रतिष्ठितं । तत्रैव ज्ञानोत्पत्तेः यच्च तत् अजिरं नित्यं प्रौढं यविष्ठं यवशालिनं वेगवत् तन्मे मन (१) इति ॥ ६ ॥

अथ पुरुषसूक्तम् ।

सहस्रशीर्षा पुरुषः

सहस्राक्षः सहस्रपात् ॥ स भूमिꣳ सर्वतस्स्पृ-

त्वात्यतिष्ठद्दशाङ्गुलम् ॥ १ ॥

सहस्रशीर्षेति पुरुषईश्वरः

दशाङ्गुलं नाभेरुर्द्धं अतिक्रम्य ॥

अर्थात् हृत्पद्मेऽतिष्ठत् स्थितोऽभूत् अभवत् । अर्थवशाद्धृत्पद्मोपरि-ज्ञानात्मकः पुरुषरूपेण सएवान्तर्यामी कर्मफलोपभोजकइत्युच्यते । किं कृत्वा भूमिं सर्वतः स्पृत्वा व्याप्य (पृङ्व्यायामे) सर्वतइति कस्मा-दित्यात्मत्वं भूमिशब्दोऽत्रभूम्यारब्धप्राणिदेहवचनः तेन सर्वभावेन त्रैलोक्यवर्तिनः पार्थिवदेहान् व्याप्येत्यर्थः, भूमिशब्दः पञ्चभूतोप-लक्षकइति केचित् भूमिशब्दोऽत्र आधारोपलक्षकः तेन तिर्यगूर्द्ध्वा-धोव्यापकइत्यर्थः । स क ईश्वरः सहस्रशीर्षा सहस्रशब्दोऽसङ्-ख्यातवाचकः तेनासङ्ख्यातशिराः इत्यर्थः, पुनः किं भूतः स्सहस्राक्षः अत्राक्षशब्दः षड्बुद्धोन्द्रियोपलक्षकः तानि च पञ्च तथा च त्रैलो-क्योदरे वर्तमानानि शिरांसि बुद्धीन्द्रियाणि कर्मेन्द्रियाणि च तानि

(१) मनः स्वास्थ्ये एव वेदत्रयोस्फूर्तेर्मनसि शब्दमात्रस्य प्रति-ष्ठितत्वम् । अन्नमयं हि सौम्य मन इति सामवेदीयछान्दोग्योप-निषदि । मनस एव स्वास्थ्ये वेदोच्चारणशक्तिः प्रतिपादितेति ॥

सर्वाणि अस्यैवेत्यर्थः, अत्र नाभेरूर्द्धं दशांगुलं अतिक्रम्य हृदयं भवतीति सकललोकानुभवसिद्धमेव तत्र पुरिषु तिष्ठतीत्यत्र श्रुतिप्रमाणं कतमआत्मेत्युपक्रम्य सोऽयं विज्ञानमयः पुरुषः प्राणिषु हृदयं ज्योतिरितिश्रुतिः एतौ सुपर्णाविति च, यमो वैवस्वतो देवो यस्तवैष व्यवस्थित इति मनुवचनप्रमाणम्। वृत्वेति वृङ्व्यायाम इत्यस्मात् क्त्वान्तं रूपं. अत्रात्मा ब्रह्माण्डोदरं व्याप्य ब्रह्माण्डोपरिदशाङ्गुलं अतिक्रम्यातिष्ठत् दशाङ्गुलमित्युपलक्षकं ब्रह्माण्डाद्बहिरथ व्यापयदित्यर्थं इति शङ्कराचार्य टीका ॥ १ ॥

पुरुषऽएवेदᳬं सर्वं यद्भूतं यच्च भाव्यम् ॥
४
उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥२॥

इदं यत्किंचिद्वर्त्तमानकालीनं यद्भूतं यदतीतकालीनं यच्च भाव्यं भविष्यत्कालीनं तत्सर्वं पुरुषएव तथा वर्त्तमानभूतभविष्यत्कालस्वरूपो भगवानधिकृतिरूपइति दर्शितं उत किं च न केवलमेव किं तु यदन्नेन अदनीयेन भक्तादिना अतिरोहति अतिशयेन जन्मस्थितिं च लभते तत्सर्वं पुरुषएव तथा च ये स्थावरजङ्गमा भक्ताद्याहारेण जन्म स्थितिं च लभन्ते ये च स्थावरवृक्षशिलादयो जलतर्पणरूपेणाहारेण जन्म स्थितिं च लभन्ते सर्वएव ब्रह्मादिस्तम्बपर्यन्ताः पुरुषरूपाइत्यर्थः, तथा च श्रुतिः सर्वं खल्विदं ब्रह्म, पुरुषः किं भूतः अमृतत्वस्य मोक्षस्य ईशानः प्रभुः मोक्षदातापि सएव पुरुषइत्यर्थः यद्वा वर्त्तमानकालीनादि यद्वसुजातं तत्सर्वं पुरुषएव परमेश्वरः किं च यदन्नेनातिरोहति तेषामेतद्वस्तु अमृतत्वस्य मोक्षस्येशानः इत्यन्वयः ॥ २ ॥

एतावानस्य महिमाऽतो ज्यायांश्च
पूरुषः ॥ पादोऽस्य विश्वा भूतानि
त्रिपादस्यामृतं दिवि ॥ ३ ॥

अस्य पुरुषस्य एतावान्महिमा यत्पूर्वकथितकोटत्वसर्वदेशकाल-व्यापित्वं संसारापवर्गप्रभुत्वं नाम अतोऽस्मात्कारणात्पुरुषः ज्यायान् ज्येष्ठः पुरुषोत्तमः किं च अस्य एकपादः विश्वा भूतानि चराचरात्मकानि सर्वाणि भूतानि अपरं च त्रिपात् पादत्रयं अस्य दिवि स्वर्गे आकाशे वा पादत्रय ऋग्यजुः सामात्मक पादश्चतुर्थादिः अस्य पुरुषस्यावशिष्टं त्रिपातस्वरूपम् किं भूतं विनाशरहितं अमृतं मोक्षद्वारं सूर्यमण्डल भेदनद्वारेण गच्छतां मुमुक्षूणां परमात्मनि लयान्मोक्षद्वारइत्यर्थः यद्वा त्रिपाद्विज्ञानमयानन्दरूपं दिवि विद्योतने स्वमहिम्नि स्वर्गे द्वारे व्यातिष्ठतीत्यर्थः, यद्वा योगिध्येयं तदेव त्रिपात् दिवि सत्यसङ्कल्पादौ गुणे स्थितमित्यर्थः ॥ ३ ॥

त्रिपादूर्ध्व उदैत्पुरुषः पादोऽस्येहाभवत्पुनः ॥
ततो विष्वङ्व्यक्रामत्साशनानशने अभि ॥ ४ ॥

४

अस्य चतुष्पादलक्षणस्य पुरुषस्य योऽसौ त्रिपात् पदत्रयस्वरूपः ऋग्यजुः सामलक्षणो भगवानादित्यः सोऽभ्युदैत् । उदितः किं भूतः ऊर्ध्वः दिविस्थः यद्वा कर्मबन्धनिबन्धनानां स्थावरजङ्गमादीनामुपरिभूतइत्यर्थः किं चास्य चतुष्पादलक्षणस्य पुरुषस्य पादो लेशः जगद्रूपश्चतुर्थांशः हिरण्यगर्भतया जगति अभवत् प्रथमं सत्तामात्रेणावस्थानमकरोदित्यर्थः, जगति किं भूते साशनानशने

भोक्तरि अभोक्तरिच येषां च सुकृतदुष्कृते अधिकारस्ते भोक्तारः ब्राह्मणादयः येषामनधिकारस्तेऽभोक्तारो वृक्षकृमिकीटादयः तदेवं कर्माधिकारिणि अनधिकारिणि च सर्वत्र जगति अपरः पादः सत्तामात्रेणातिष्ठदित्यर्थः ततः पुनस्तदनन्तरं विष्वक्व्यक्रामत् व्याप्तवान् सर्वशरीराणि व्याप्यावस्थानमकरोदित्यर्थः, यद्वा प्रथमं जगति सत्तामात्रेणाभवत् ततः विष्वक् सर्वतः साशनानशने भोक्तारमभोक्तारं च व्यक्रामद्व्याप्तवान् तत्र विषुशब्दादञ्चुगतिपूजनयोरित्यस्माद्धातोः क्विपि विष्वङ्ङिति रूपं, अभिशब्देन व्यवहितेनोदैतीत्यन्वयः ॥ ४ ॥

तत॑ो वि॒राड॑जायत वि॒राजो॒ऽअधि॒ पूरु॑षः ॥
स जा॒तोऽअत्य॑रिच्यत प॒श्चाद्भूमि॒मथो॑ पु॒रः ॥ ५ ॥

ततः पुरुषात् हिरण्यगर्भात् विराट् ब्रह्मा अजायत तस्माद्विराजः ब्रह्मणः सकाशात् पुरुषो मनुरभ्यजायत स मनुर्जातः सन्पुरोऽग्रे पूर्यन्ते सप्तभिर्धातुभिरितिपुरः शरीराणि वा ससर्ज । पश्चादपि भूमिं अत्यरिच्यत अतिरिक्तो भूमावसक्तोऽभवत् भूमिपदं देशोपलक्षणार्थं पुरः पश्चादिति जीवभावादूर्ध्वम् कालोपस्थापकं तेन क्वचिदपि देशे काले वा तस्य मनोः पुत्रपौत्रादिसंबन्धिभिः सङ्गो नाभूदित्यभिप्रायः ॥ ५ ॥

तस्मा॑द्य॒ज्ञात्स॑र्व॒हुत॒ः सम्भृ॑तं
पृषद॒ाज्यम् ॥ प॒शूँस्ताँश्च॑क्रे
वा॒य॒व्याना॑र॒ण्या ग्रा॒म्याश्च॒ ये ॥ ६ ॥
४

तस्मात्पूर्वोक्तपुरुषमेधाख्ययज्ञात् सर्वव्यापकात्पुरुषचतुर्थपादात्सर्वहुतः सर्वैर्हूयमानत्वाद्यज्ञस्वरूपात्पृषदाज्यं हविः संभृतं समुत्पन्नं

तत्पृषदाज्यं तान्पशूंश्चक्रे चकार तान्कान् ये आरण्या ग्राम्याश्च आरण्या मृगादयः ग्राम्याश्छागादयः तान्किं भूतान् वायव्यान् वायुदेवत्यान् ॥ ६ ॥

तस्माद्यज्ञात्सर्वहुतऽऋचः सामानि यज्ञिरे ॥
छन्दांसि यज्ञिरे तस्माद्यजुस्तस्मादजायत ॥

तस्मात्सर्वहुतः सर्वैर्हूयमानाद्यज्ञाद्यज्ञपुरुषात् ऋचः ऋग्वेदाः सामानि सामवेदा. जज्ञिरे जाताः तस्मादेव छन्दांसि गायत्रीप्रभृतीनि जज्ञिरे जातानि तस्मादेव यजुः अजायत आसीदित्यर्थः ॥७॥

तस्मादश्वाऽअजायन्त ये के चो
भयादतः ॥ गावो ह यज्ञिरे
तस्मात्तस्माज्जाताऽअजावयः ॥ ८ ॥

तस्माद्यज्ञात्सर्वयज्ञरूपात् अश्वाः अजायन्त न केवलमश्वाः किंतु ये के चोभयादतः ये के च न (१) उभयतो दन्ताः पशव अश्वादयः तेऽप्यजायन्त जाताः तस्मादेव गावः यज्ञिरे जाताः तस्मादेव अजा अवयश्च जाताः छागाः अवयो मेषाः उभयादतइति, अन्येष्वोऽपि दृश्यते इति दीर्घः, गावो ह हकारः समुच्चयार्थः अत्र कण्डिकात्रये यत्किञ्चिद्विराडात्मकं विध्यर्थवादमन्त्राश्रया वेदाश्च पुरुषोत्तमात्पुरुषमेधयज्ञस्वरूपादेव सर्वं जातमिति वाक्यार्थः ॥८॥

तं यज्ञं बर्हिषि प्रौक्षन्पुरुषं जातमग्रतः ॥
तेन देवाऽअयजन्त साध्याऽऋषयश्च ये ॥९॥

तं पुरुषं यज्ञसाधनभूतं बर्हिषि संस्थाप्य देवा ब्रह्मप्रभृतयः

साध्याः साध्यनामानः गणदेवताः ऋषयः मरीचिप्रभृतयः प्रौक्षन् प्रोक्षितवन्तः किं भूतं अग्रतः सृष्टेः पूर्वजातं पुरुषत्वेनेत्यतः प्रागुक्तं प्रथमतः जातं तस्मात्तदानीमन्यद्धविरभावे स्वयमेव हविरासीदित्यर्थः न केवलं प्रौक्षन् किं तु तेन पुरुषेण यज्ञेन यज्ञसाधनभूतेन अयजन्त यागं कृतवन्तःअत्र कारणे कार्य्योपचारात् यज्ञेन यज्ञसाधनमभिधीयते प्रौक्षन् ग्रहणं सकलसंस्कारोपलक्षणार्थं तथा च पुरुषं पृषदाज्यादिरूपं यज्ञसाधनभूतं प्रोक्षणादिसंस्कारैः संस्कृत्य तेन पृषदाज्यादिरूपेण देवा यागं कृतवन्त इति वाक्यार्थः ॥ ९ ॥

यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन् ॥
मुखं किमस्यासीत्किं बाहू किमूरू
पादाऽउच्येते ॥ कौ पादाउच्येते इति
ऋग्वेदीयपाठः ॥ १० ॥

प्रश्नोत्तररूपेण ब्राह्मणादिसृष्टिं वक्तुं ब्रह्मवादिनां प्रश्ना उच्यंते प्रजापतेः प्राणरूपादेव यत् यदा पुरुष व्यदधुः कालेनोदपादयन् तदा कतिधा कतिभिः प्रकारैर्व्यकल्पयन् विविधं कल्पितवन्तः अस्य पुरुषस्य मुखं किमासीत् । किं बाहू ऊरू चास्तां किं च पादावपि किमास्तामित्यर्थः ॥ १० ॥

ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्य+
४ ४
कृतः) ॥ ऊरू तदस्य यद्वैश्य+
पद्भ्याᳪ शूद्रोऽ अजायत ॥ ११ ॥

ब्राह्मणइति पूर्वकण्डिकायां स्तुत्यर्थं विकल्प क्रतः आकांक्षो-त्थापनाय अत्र स्तुतिमाह अस्य पुरुषस्य मुखं ब्राह्मण आसीद्बभूव बाहू राजन्यः क्षत्रियः क्रतः अर्थादीश्वरेणैव अस्य ऊरू यत्तद्वैश्यः क्रतः एतेन ब्राह्मणादयः अस्य मुखादिभ्यो जाताइति बोद्धव्यं, अग्रे तथा दर्शनात्पद्भ्यां शूद्रः अजायत अयमेव ब्राह्मणादिचतुष्टयरूप इति वाक्यार्थः ॥

चन्द्रमा मनसो जातश्चक्षोः सूर्यो ऽअजायत ॥
श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायत ॥ ११ ॥

अस्य पुरुषस्य मनसः सकाशाच्चन्द्रमा जातः चक्षोः चक्षुषः सूर्यः अजायत जातः श्रोत्राद्वायुश्च प्राणश्च अजायत मुखादग्निश्च अन्यत्र चन्द्रमासूर्यौ बाहुभ्यो मनश्चक्षुः श्रोत्राणामुत्पत्तिरिति सृष्टिक्रमः अत्र तु अचिन्त्यमहिम्नि पुरुषे मनश्चक्षुः श्रोत्रेभ्यश्चन्द्रमाप्रभृतीना सुत्पपत्तिक्रम इति विपरीतमर्थं स्तुतिरिति वाक्यार्थः ॥ ११ ॥

नाभ्याऽ आसीदन्तरिक्षꣳ शीर्ष्णो
द्यौः समवर्त्तत ॥ पद्भ्याम् भूमिर्दिशः
श्रोत्रात्तथा लोकाँऽ २ ॥ अकल्पयन् ॥ १२ ॥

नाभ्या नाभितः अन्तरिक्षमाकाशं बभूव शीर्ष्णः मस्तकात् द्यौः स्वर्गः समवर्त्तत समभवत् पद्भ्यां पादद्वयाद्भूमिः समवर्तत श्रोत्रात्कर्णाद्दिशः समवर्त्तत स एव पुरुषः लोकान् देवमनुष्यादि निखिलस्थावरजङ्गमादित्रैलोक्यं अकल्पयन् अकल्पयत्सृष्टवान् ॥

यत्पुरुषेण हविषा देवा यज्ञमतन्वत ॥

वसन्तोऽस्यासीदाज्यं ग्रीष्मऽइध्मः

४

शरद्धविः ॥ १४ ॥

यत्पुरुषेण हविषा हविर्भूतेन देवाः यत् यज्ञं अतन्वत कृतवन्तः देवाइत्युपलक्षणं साध्या ऋषयश्च अस्य वसन्तः ऋतुविशेषः आज्यं घृतमासीत् ग्रीष्मइध्मः समिद्विशेषः, शरद्धविः योग्यतावशात् आज्यातिरिक्तं हविः पुरोडाशादि अत्र कश्चिकाव्युत्क्रमोऽस्ति अस्या अनन्तरं तंय्यज्ञम् । ततस्तस्माद्यज्ञादिति तिस्रऋचः क्रमेणैव ततः सप्तास्यासन्निति सृष्टिक्रमोऽपेक्षितः ॥

सप्तास्यासन्परिधयस्त्रिः सप्त समिधः

कृताः ॥ देवा यद्यज्ञं तन्वानाऽ

अबध्नन्पुरुषं पशुम् ॥ १५ ॥

अस्य पुरुषस्य यज्ञस्य परिधयः भूमिवेष्टनानि सप्त अर्थात्समुद्राः आसन् बभूवुः त्रिःसप्त एकविंशतिसमिधः कृताः सप्त छन्दांसि सप्त उपच्छन्दांसि सप्त व्याहृतयश्च एतानि समिधः कृताइत्यर्थः, अस्य कस्य यत् यज्ञं तन्वानाः कुर्वाणा देवाः पशुं पशुभूतं पुरुषं अबध्नन् बद्धवन्तः । अत्र सप्तेति सङ्ख्यामात्रं श्रूयते न तु सङ्ख्येयं तत्र सङ्ख्येये कल्प्यमाने यज्ञभूमिवेष्टकं कल्पनीयं यज्ञभूमिश्च भारतवर्षात्तद्वेष्टकाश्च लवणार्णवप्रभृतयः सप्त समुद्रा एव भवन्ति । त्रिः सप्त इत्यपि सङ्ख्येयकल्पनायां छन्दांसि जज्ञिरे । तस्मादित्यत्र यज्ञसाधनसृष्टौ एकविंशतिछन्दसामुक्तत्वात्तेषामेव ग्रहणम् ॥ १५ ॥

यज्ञेन यज्ञमयजन्त देवास्तानि धर्म्माणि प्रथमान्यासन् ॥ ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ॥ १६ ॥

देवा इन्द्रादयः यज्ञेन यज्ञसाधनभूतेन पुरुषेण पश्वादिरूपेण यज्ञं पुरुषं पुरुषोत्तमं अयजन्त पूजितवन्तः अत्र दृष्टं पुरुषं पशुं कृत्वा हिंसात्मकेन च कर्मणा यज्ञः क्रियतइत्याह । तानि धर्माणि प्रथमान्यासन् तथा च ते धर्माः प्रथमा मुख्यानि एवासन् अन्यत्र तद्दर्शनमसम्भावितमेवेत्यर्थः । अतएव ते देवा एवं विधेनैव यज्ञेनेष्ट्वा नाकं स्वर्गं सचन्त सङ्गताः यत्र नाके पूर्वे साध्यादयो देवाः सन्ति महिमानः महात्मानः ते ह नाकमित्यत्र हकारश्छान्दसः स्तोभः । सचन्त इति, षचसमवाये, इत्यस्माल्लङ् प्रथमपुरुषबहुवचनं छन्दस्यमाङ्योगेपीत्यागमनिषेधः ॥

अथोत्तरनारायणम् ।

अद्भ्यः सम्भृतः पृथिव्यै रसाच्च विश्वकर्मणः समवर्त्तताग्रे ॥ तस्य त्वष्टा विदधद्रूपमेति तन्मर्त्यस्य देवत्वमाजानमग्रे ॥ १७ ॥

त्वष्टा आदित्यः अद्भ्यः जलात् पृथिव्यै पृथिव्या अपि अग्रे सम्भृतः बभूव अत्र पृथिवीपदं पञ्चभूतोपलक्षणार्थं तेन पञ्चभूतोत्पत्तिपूर्वकालएव सम्भृतः पुष्टइत्यर्थः न केवलपञ्चभूतेभ्यएव पूर्वं सम्भृतः किं तु विश्वकर्मणो ब्रह्मणः सकाशात् जलेभ्यः रसादिच्छा-

तोऽपि पूर्वं समवर्तत यदा विश्वकर्मणो जगन्निर्माणेनेच्छाभूत्तदैव समवर्ततइत्यर्थः तस्मात्तस्यादित्यस्य तद्रूपं मण्डलाकारं मर्त्यस्य मनुष्याणां सृष्टितोऽपि अग्रे पूर्वं देवत्वं विदधत् धारयत एति एभिर्मनुष्यः समेति समागच्छतीति अतिशयेन ज्ञातवान् देवा द्विविधाः उत्कृष्टेन कर्मणा देवत्वप्राप्ताः कर्मदेवाः। सृष्ट्यादावुत्पन्नाः प्रधानदेवाः ॥

वेदाहमेतम्पुरुषं महान्तमादित्यवर्णं तमसः
परस्तात् ॥ तमेव विदित्वाऽतिमृत्युमेति
नान्यः पन्था विद्यतेऽयनाय ॥ १८ ॥

अहमेतं पुरुषं वेद जानामि अस्मदादीनां सर्वेषामनुभवसिद्धइत्यर्थः एतं किं भूतं महान्तं सर्व्वव्यापकं पुनः किं भूतं आदित्यवर्णं ज्योतिर्मयमित्यर्थः यथाऽऽदित्यः स्वप्रकाशकः परानपि प्रकाशयति तथाऽयमपि स्वप्रकाशब्रह्मरूपो जगदपि प्रकाशयति तमसः परस्तात्। अविद्यात्मकसंसारात् परमुत्तीर्णमित्यर्थः, तमेवादित्यरूपं पुरुषं ज्ञात्वा मृत्युं अतिक्रम्य एति गच्छति अपुनरावृत्तये नान्य इति अयनाय मृत्युमतिक्रम्य गमनाय अर्थात् मोक्षाय अन्यः पन्था न विद्यते तथाचायमेव पुरुषो ध्यानगम्यो ज्ञातो मोक्षं ददातीति वाक्यार्थः ॥

प्रजापतिश्चरति गर्भेऽअन्तरजायमानो
बहुधा विजायते ॥ तस्य योनिम्परि पश्यन्ति
धीरास्तस्मिन्ह तस्थुर्भुवनानि विश्वा ॥ १९ ॥

प्रजानां पतिः प्रजापतिः पुरुषएव सूर्यरूपः अन्तश्चरति अर्थात्प्राणिनां देहमध्ये जीवात्मकरूपतया वसतीत्यर्थः किं भूतः गर्भे जायमानोऽपि नित्यत्वादनुत्पत्तिधर्मा अपि बहुप्रकारेण जायते स्थावरजङ्गमात्मकदेहेषु जन्म लभते यद्वा जायमानोऽपि गर्भे बहुधा विजायते रामादिशरीरेणेत्यर्थः, तस्य योनिमुत्पत्तिस्थानं धीरा ब्रह्मवादिनः परिपश्यन्ति ध्यानेन सम्यगुपलभ्यन्तइत्यर्थः. तत्स्थानं ब्रह्मैवेति तात्पर्यं तस्मिन् प्रजापतौ भुवनानि विश्वा सर्वाणि भूतानि स्वर्गमृत्युपातालादीनि तस्थुः स्थितानि, हकारः स्तोभार्थः, विश्वाइति निलोपश्छान्दसः ॥

यो देवेभ्य आतपति यो देवानाम्पुरोहितः ॥ पूर्वो यो देवेभ्यो जातो नमो रुचाय ब्राह्मये ॥ २० ॥

सूर्यः आतपति आसमन्ताद्भावेन तपति किमर्थं देवेभ्यः देवानां प्रयोजनाय उदिते आदित्ये कर्मण्यधिकारी भवति यः देवानां पुरः अग्रे हितः स्थापितः देवानां हविर्दानाय पूर्वमग्निरूपेणाधीयते इत्यभिप्रायः, यो देवेभ्यः सकाशात्पूर्वो जात उत्पन्नः आदित्यो द्वादशादित्यः प्रथमः समुत्पन्नइत्यर्थः, तस्मै आदित्याय नमः किं भूताय रुचाय रोचमानाय ब्राह्मये ब्रह्मभूताय, ब्रह्मणः अपत्यं ब्राह्मिः तस्मै ॥

रुचं ब्राह्मं जनयन्तो देवा अग्रे तदब्रुवन् ॥

यस्त्वैवम्ब्राह्मणो विद्यात्तस्य देवा असन्वशे ॥ २१ ॥

देवा ब्रह्मादयः जनयन्तः स्वयमुत्पद्यमानाः तं ब्राह्मं ब्रह्मसुतं रुचं रोचमानं प्रकाशरूपमादित्यमग्रे प्रथममब्रुवन् अयमेवास्माकं मुख्यइत्युक्तवन्तः किं च हे पुरुषोत्तम त्वा त्वामेवमनेन प्रकारेण सूक्तोक्तविश्वरूपं यो ब्राह्मणो विद्याज्जानीयात् तस्य ब्राह्मणस्य देवा वशे इच्छायां असन् भवन्ति इच्छानुवर्तिनो भवन्ति तथा च सहस्रशीर्षेत्यादिग्रन्थतोऽर्थतश्चाधीत्य यो ब्राह्मणः पुरुषोत्तमं जानाति तस्य ब्राह्मणस्य देवा ब्रह्मादयः अभिलषितान् सम्पादयन्तीतिवाक्यार्थः ॥

श्रीश्च॑ ते ल॒क्ष्मीश्च॒ पत्न्या॑वहोरा॒त्रे पा॒र्श्वे
नक्ष॑त्राणि रू॒पम॒श्विनौ॒ व्यात्त॑म् ॥ इ॒ष्णन्नि॑-
षाणा॒मुम्म॑ऽ इ॒षाण सर्व॑लो॒कम्म॑ऽ इ॒षाण ॥२२॥

हे पुरुषोत्तम तव श्रीः लक्ष्मीश्च पत्न्यौ सहचारिण्यौ त्वामालभतइत्यर्थः, चकारद्वयं तुल्यप्राधान्यज्ञापनार्थं श्रीरैश्वर्य्यं लक्ष्मीर्धनं यद्वशात्पुरुषो लोकानामाश्रयणीयो भवति यद्वशात्पुरुषः लोकानां वा सर्वलोकस्य लक्ष्मीर्दर्शनीयो भवति, लक्षदर्शनाङ्कनयोरित्यस्य रूपम् । अहोरात्रे पार्श्वे अहः रात्रीश्च पार्श्वद्वयं अहः शब्दः परब्रह्मपरः तस्य विद्यात्मकत्वेन प्रकाशरूपत्वात् रात्रिशब्दः संसारपरा प्रकृतिपरः तस्याविद्यात्मकत्वेनाप्रकाशकत्वात् एतेन धर्मार्थकामात्मकः संसारः मोक्षश्च श्रीपरमेश्वरपार्श्वे द्वयमित्युक्तं भवति । नक्षत्राणि रूपं नारायणो मूर्तिरित्यर्थः, अश्विनौ द्यावापृथिव्यौ तव व्यात्तं विवृतं मुखमित्यर्थः, तथा च श्रुतिः इमे होदं-

त्वां सर्वं व्याप्तवतामिति, एवं भूत त्वां पुरुषोत्तमं याचे इषान् इच्छन्तं सकामं इषाण गच्छ अनुगृहाण, निजोपासकं सत्वमनुगृहाणेत्यर्थः, किं च मे मम इमं लोकं भार्यापुत्रजनादिकं इषाण न केवलममुं किं तु मे मम सर्वलोकं भूरादिसप्तलोकं इषाणायं वाक्यार्थः, यः कश्चित्स्वर्गपुत्रादिकामयमानोऽनेन सहस्रशीर्षाध्यायेन त्वां स्तौति पूजयत्युपतिष्ठते तमनुगृहाण ममापि पशुपुत्रादिधनयुक्तमिहलोकं स्वर्गमोक्षादिकमिच्छितवाञ्छामात्रेणैव सर्वं सम्पाद्यते सत्येच्छत्वादित्यभिप्रायः, अत्र स्तुतिपूर्वं प्रार्थना भवतीति स्तुत्वा प्रार्थना ॥ २२ ॥

इति षडङ्गे द्वितीयः ॥ २ ॥

आशुः शिशानो वृषभो न भीमो
घनाघनः क्षोभणश्चर्षणीनाम् ॥
सङ्क्रन्दनो ऽनिमिषऽ एकवीरः शतꣳ
सेनाऽ अजयत्साकमिन्द्रः ॥ १ ॥

इन्द्रं स्तौति इन्द्रः शतं बह्वीः सेनाः सदैव एकदैवाजयत् जितवान् इन्द्रः किं भूतः आशुः शीघ्रः शिशानः शातनकर्त्ता शीतनूकरणे, वृषभो न भीमः, नकारः उपमार्थीयः, वृषभइव भीमः बिभेत्यस्मादिति भीमः भयानकः घनाघनः हनहनेत्येवं वक्ता यद्वा घनशरीरः पुनः किं भूतः चर्षणीनां मनुष्याणां क्षोभणः सञ्चालकः सङ्क्रन्दनः सङ्ग्रामकारिणां समाह्वता अनिमिषः अप्रमादी अर्थादाहवे यद्वा अनिमिषो देवः एकवीरः विक्रान्तः ॥

सङ्क्रन्दनेनानिमिषेण जिष्णुना युत्कारेण दुश्च्यवनेन धृष्णुना ॥ तदिन्द्रेण जयत तत्सहध्वं युधो नरऽ इषुहस्तेन वृष्णा ॥१॥

तदिन्द्रेण तादृग्गुणविशिष्टेनेन्द्रेण यत्सैन्यं जितमितिशेषः हे नरः मनुष्याः हे युधः योद्धारः तत्सहध्वं तव जयत।भिभवतः, युध-संप्रहारइत्यस्य क्विप्युधइति, कीदृशेनेन्द्रेण सङ्क्रन्दनेन शब्दकारिणा अनिमिषेण एकचित्तेन अप्रमाद्यता जिष्णुना जयनशीलेन युत्कारेण सम्प्रहारिणा दुश्च्यवनेन अप्रच्युतस्वभावेन धृष्णुना प्रहसनशीलेन पुनः किं भूतेन इषुहस्तेन बाणपाणिना वृष्णा वर्षणशीलेन यद्वा इन्द्रेण तत् जितमिति योजना ॥

सइषुहस्तैः सनिषङ्गिभिर्वशी सꣳस्रष्टा सयुधऽ इन्द्रो गणेन ॥ सꣳसृष्टजित्सोमपा बाहुशर्द्ध्युग्रधन्वा प्रतिहिताभिरस्ता ॥ ३ ॥

स इन्द्रः इषुहस्तैर्योद्धुभिः संस्रष्टा संसृजति मिलति स एवेन्द्रो निषङ्गिभिः षङ्गिभिः संसृजति सः किं भूतः वशी कान्तः सर्वजनप्रियः स्वतन्त्रो वा निगृहीतारिषड्वर्गईश्वरो वा स इन्द्रः युधः युध्यतेऽसौ युद्धकर्त्ता गणेन शत्रुगणेन संसृज्य संसृष्टजित्संसृष्टान् शत्रून् जयति संसृष्टजित् पुनः किं भूतः सोमपा पुनः किं भूतः बाहुशर्द्धी बाहुबली बाहुबलोपेतः । संयोगितनिरपेक्षः शर्द्ध इति बलनाम, उग्रधन्वा उद्यतधनुः पुनः किं भूतः प्रतिहिताभिरस्ता

शत्रुशरीरे प्रतिहताभीरिपुभिः अस्ता चेष्टा शत्रूणामेवाग्रे वा शत्रू-णामेव एतेन लघुसन्धानत्वमुक्तम् ॥

बृहस्पते परि दीया रथेन रक्षोहामित्राँ २॥

ऽअप बाधमानः ॥ प्रभञ्जन्त्सेनाः प्रमृणो

युधा जयन्नस्माकमेध्यविता रथानाम् ॥ ४ ॥

इन्द्रः पुरोहितत्वेन बृहस्पतिः स्तूयते हे बृहस्पते रथेन परि-दीय परि गच्छ त्वं किं भूतः रक्षोहा । किं कुर्वन् अमित्रान् शत्रून् अपबाधमानः परि पीडयन् किं च सेनाः शत्रुसेनाः प्रभञ्जन् प्रमर्दयन् सन् प्रमृणः प्रमर्दकान्युधा जयन् अस्माकं रथानां अविता गोप्ता रक्षकः एधि भव असुधातोर्जह्येधिरितिलोपे एधि ।

बलविज्ञाय स्थविरः प्रवीरः सहस्वान्वाजी

सहमानऽउग्रः ॥ अभिवीरोऽअभिसत्वा

सहोजा जैत्रमिन्द्र रथमातिष्ठ गोवित् ॥ ५ ॥

हे इन्द्र स त्वं जैत्रं जेतारं रथं आतिष्ठ त्वं किं भूतः गोवित् नः किं भूतः बलविज्ञायः बलेन विज्ञायते बलविज्ञायः प्रसिद्धः स्थविरः सर्वानुशासकः सर्वमान्यो वा चिरन्तनो वा प्रवीरः प्रकृ-ष्टो वीरः सहस्वान् बलवान् वाजी वाजमान् वाजमन्नं सहमानः उग्रश्च भीषणः अभिवीरः वीरं वीरमभिलक्षीकृत्य गच्छत्यभिवीरः अभिसत्वाः सत्वं अभितिष्ठति सः सहोजाः सहइति बलनाम, बलाज्जातः नह्यस्माज्जातः एतादृशो भवति ॥

गोत्रभिदं गोविदं वज्रबाहुञ्जयन्तमज्म

प्रमृणन्तमोजसा ॥ इमꣳ सजाता

ऽअनु वीरयध्वमिन्द्रꣳ सखायोऽ

अनु सꣳरभध्वम् ॥ ६ ॥

हे सजाताः समानजन्मानो देवाः इमं इद्रं अनुवीरयध्वं वीरकर्मकुर्वाणं वीरकर्माणं वाऽनुगम्य प्रोत्साहयत हे सखायः सखिभूताः एनं अनुसंरभध्वं अनुगम्य संरंभं कुरुत एनं किं भूतं गोत्रभिदं पण्डितं यद्वा गोत्रभिदं वृष्ट्यर्थं मेघं भिनत्ति वज्रपाणिं जयन्तं अज्मनशीलं अज्म सङ्ग्रामं जयन्तं ओजसा बलेन प्रमृणन्तं मर्द्दयन्तं अर्थात् अज्मैव अज्म सङ्ग्रामः ॥

अभि गोत्राणि सहसा गाहमानोऽदयो व्वीरः

शतमन्युरिन्द्रः ॥ दुश्च्यवनः पृतनाषाडयु-

द्ध्योऽस्माकꣳ सेनाऽ अवतु प्रयुत्सु ॥ ७ ॥

इन्द्रः अस्माकं सेना प्रयुत्सु प्रकृष्टयुद्धेषु अवतु रक्षतु इन्द्रः किं भूतः गोत्राणि असुरकुलानि मेघवृन्दानि वा सहसा बलेन अभि गाहमानः आक्रामत् अदयः निस्त्रासः वीरः विक्रान्तः शतमन्युः बहुक्रोधः शतयज्ञो वा दुश्च्यवनः अनचाल्यः पृतनाषाट् अयुध्यः युध्यमाने प्रति नियोधः ॥ ७ ॥

इन्द्रऽ आसान्नेता बृहस्पतिर्द्दक्षिणायज्ञः

पुरऽ एतु सोमः ॥ देवसेनानामभि

भञ्जतीनाञ्जयन्तीनाम्मरुतो यन्त्वग्रम् ॥ ८ ॥

आसां देवसेनानां व्यूहरचनानां इन्द्रः नेता भवतु नियामको भवतु बृहस्पतिश्च नेताऽस्तु मन्त्रिप्रणीतानि कार्याणि राजा करोतीत्यभिप्रायः दक्षिणा दक्षिणस्यां दिशि यज्ञः एतु सोमः पुरः पुरस्तादेतु आगच्छतु यद्वा दक्षिणा यज्ञः सोमः पुरएतु सेनानां किं भूतानां अभिभञ्जतीनां मर्द्दयन्तीनां शत्रूनिति शेषः, जयन्तीनां तानेव किं च मरुतः गणभूताः अग्रं निरुध्येति शेषः यन्तु गच्छन्तु ॥

इन्द्र॑स्य॒ वृष्णो॒ वरु॑णस्य॒ राज्ञ॑ऽ आदि॒त्याना॑-
म्म॒रुता॒ᳪ॑ शर्द्ध॑ऽ उ॒ग्रम् ॥ म॒हाम॑नसां भुवनच्य॒-
वाना॒ं घोषो॑ दे॒वानां॒ जयता॒मुद॑स्थात् ॥ ९ ॥

वृष्णः वर्षितुरिन्द्रस्य राज्ञः वरुणस्य आदित्यानां मरुतां च शर्द्धः बलं हस्त्यश्वरथपादान्तं लक्षणं उदस्थात् उद्भूव शर्द्धः किं भूतः उग्रं उद्गीर्णायुधं अथानंतरमेव देवानां घोषः उदस्थात् देवानां किं भूतानां जयतां जयशालिनां महामनसां उत्कृष्टचित्तानां भुवनच्यवानां भुवनच्यवनसमर्थानां जितं जितमिति शब्दस्तेषामुद्भूतइत्यर्थः ॥

उद्ध॑र्षय मघव॒न्नायु॑धा॒न्युत्सत्त्व॑नाम्मा॒मका॑-
ना॒म्मना॑ᳪ॑सि ॥ उद्वृ॑त्रहन्वा॒जिना॒ं वाजि॑ना॒-
न्युद्रथा॑ना॒ं जय॑तां जन्तु॒ घोषा॑ः ॥ १० ॥

च्यवनसमर्थानां जितं जितमितिशब्दस्तेषामुद्भूतइत्यर्थः हे मघवन्नायुधानि उद्धर्षय उन्नतहर्षाणि कुरु उल्लासयेति यावत् किं

च सत्त्वानां मनुष्याणां मामकानां च मनांसि उद्धर्षय किं च हे वृत्रहन् वाजिनामश्वानां वाजिनानि बलान्युद्धर्षय किं च त्वत्प्रसादाज्जयतां रथानां घोषा उद्यन्तु उद्गच्छन्तु ॥

अस्माकमिन्द्रः समृतेषु ध्वजेष्वस्माकं या इषवस्ता जयन्तु ॥ अस्माकं वीरा उत्तरे भवन्त्वस्माँ २॥ उ देवा अवता हवेषु ॥ ११ ॥

अस्माकं ध्वजेषु इन्द्रः रक्षिता भवत्विति शेषः ध्वजेषु किं भूतेषु समृतेषु सङ्गतेषु अर्थात् शक्रचापध्वजसङ्गतेष्वित्यर्थः किं च इन्द्रप्रसादादेवास्माकं या इषवस्ता जयन्तु अस्माकं वीरा उत्तरे विजयिनो भवन्तु किं च अस्मान् उ देवा अवता हवेषु उ एवकारार्थः हे देवाः अस्मानेवाह्वेषु आह्वानेषु संग्रामेषु अवत रक्षत ॥

अमीषां चित्तं प्रतिलोभयन्ती गृहाणाङ्गान्यप्वे परेहि ॥ अभिप्रेहि निर्दह हृत्सु शोकैरन्धेनामित्रास्तमसा सचन्ताम् ॥ १२ ॥

हे अप्वे अमीषां शत्रुबलसम्बन्धिनां मनुष्याणां चित्तं चित्तानि प्रतिलोभयन्ति लुभविमोहने शत्रूणां अङ्गानि गृहाण ततः परेहि परान् शत्रूनपि गृहीतुं गच्छ ततश्च अभिप्रेहि तानेव शत्रून् प्रकर्षेण एहि पुनः एनरित्यर्थः अमुनैव हृत्सु शोकैर्निर्दह तेषां हृदयानि देहेत्यर्थः किं च त्वत्प्रसादादन्धेन तमसा अज्ञानलक्षणेनामित्राः सचन्ताम् सेवन्ताम् ॥ १२ ॥

अवसृष्टा परापत शरव्ये ब्रह्मसंशिते ॥
गच्छामित्रान्प्रपद्यस्व मामीषां
कञ्चनोच्छिषः ॥ १३ ॥

हे इषो अव सृष्टानि क्षिप्तासतो परापत निपत गच्छ गच्छ पुनः पुनरुपादानं त्वरार्थं गत्वा चाऽमित्रान्प्रपद्यस्व प्रपन्ना अमीषां शत्रूणां मध्ये कं च न मा उच्छिषः माऽवशेषय शत्रूनुत्कृत्तमूलान् कुर्वित्यर्थः किं भूते शरव्ये शरमये ब्रह्मसंशिते ब्रह्मणा नितरां संशिते तीक्ष्णीकृते । १३ । योद्धृन प्रत्याह ॥

प्रेता जयता नरऽइन्द्रो वः शर्म यच्छतु ॥
उग्रा वः सन्तु बाहवो ऽनाधृष्या यथाऽसथ॥१४॥

हे नरः मनुष्याः प्रेत प्रकर्षेण गच्छत अनन्तरं अजयत व युष्माकमिन्द्रः शर्म शरणं यच्छतु किं च भवतां बाहवः तथा उग्राः उद्गीर्णायुधाः सन्तु यथा यूयं अनाधृष्या अधृष्या आसथ भवथ ।

असौ या सेना मरुतः परेषामभ्यैति नऽओजसा
स्पर्द्धमाना ॥ तां गूहत तमसा पव्रतेन यथा-
ऽमी ऽअन्योऽअन्यन्न जानन् ॥ १५ ॥

हे मरुतः याऽसौ सेना परेषां शत्रूणां अभ्येति अभिमुखमा गच्छति अस्मान्प्रतीत्यर्थः सेना किं भूता अस्मान् ओजसा बलेन स्पर्द्धमाना तां सेनां तथा गूहत व्याप्नुवत केन अपव्रतेन तमसा व्रतमितिकर्मनाम, तथा च येन तमसा शत्रूणां व्रतं अपगतं भवति

तदपव्रतं तथा च येन तमसा व्याप्तानां शत्रूणां सर्वाणि नश्यन्ति तेन व्याप्नुवता तथा कथं यथाऽमी सैनिकाः अन्यः अन्यं न जानन् परस्परं न जानीयुरित्यर्थः ॥ १५ ॥

यत्र बाणाः सम्पतन्ति कुमारा विशिखाऽइव ॥
तन्नऽइन्द्रो बृहस्पतिरदितिः शर्म्म यच्छतु
विश्वाहा शर्म्म यच्छतु ॥ १६ ॥

तत्र इन्द्रः नोऽस्माकं शर्म्म यच्छतु ददातु किं च बृहस्पतिः अदितिश्च विश्वाहा सर्वदा शर्म्म यच्छतु तत्र कुत्र यत्र बाणा इषवः सम्पतन्ति कइव विशिखाइव मुण्डितमुण्डाः कुमारा इव यथा सर्वमुण्डितमुण्डाः कुमाराः क्रीडार्थं तं तं देशं निपतेयुरित्यर्थः ॥ १६ ॥

मर्म्माणि ते व्वर्म्मणाच्छादयामि सोमस्त्वा
राजामृतेनानु वस्ताम् ॥ उरोर्व्वरीयो
व्वरुणस्ते कृणोतु जयन्तन्त्वानु देवा मदन्तु ॥ १७ ॥

सोमो राजा त्वां अमृतेनानुवस्तां आच्छादयतु किं च वरुणस्ते तव इदं वर्म उरोरपि वरीयः उत्कृष्टादप्युत्कृष्टं कृणोतु करोतु जयन्तं जयशालिनं त्वां देवा मदन्तु प्रहर्षयन्तु ॥ १७ ॥

इत्यप्रतिरथसूक्तम् । इतोऽग्रेसूर्यसूक्तमस्तीति वेदितव्यम् विभ्राडिति

विभ्राड्बृहत्पिबतु सोम्यं मध्वायुर्द्दधद्यज्ञपतावविह्रुतम् ॥ व्वातजूतो योऽअभिरक्षति त्मना
प्रजाः पुपोष पुरुधा व्विराजति ॥ १ ॥

स. सूर्यः सौम्यं सोममयं मधु हविः पिबतु सूर्यः किं भूतः विशेषेण भ्राजते दीप्यते इति विभ्राट् किं कुर्वन् यज्ञपती यजमाने अविह्रुतं अनवखण्डितं आयुर्दधत् स्थापयत् 'हृग्रोर्छन्दसीति' हकारस्य ह्रुआदेशः स' कः यः सूर्यः येन आत्मनाऽऽत्मनैवजमद्भिरक्षति 'मन्त्रेष्वाङ्यादिरात्मन'इत्याकारलोपः, यः किं भूतः वाजूतः वातप्रेरितः चेष्टितं यस्येत्यर्थः यस्य प्रजाः पुपोष पोषयति शीतोष्णवर्षैः यस्य पुरुधा बहुधा विराजति दीप्यते ऽग्निविद्युन्नक्षत्रादिभिः मधु किं भूतं बृहत् महत् । १ ॥

उदुत्यमिति सूर्योपस्थाने व्याख्यातम् ।

येना पावक चक्षसा भुरण्यन्तञ्जनाँ २॥
ऽअनु ॥ त्वँ वरुण पश्यसि ॥ ३ ॥

हे पावक येन चक्षसे दर्शनेनेव जनान् अनुलक्षीकृत्य तं सर्वमेधयाजि नं यजमानं भुरण्यं पक्षिवत् शीघ्रं गच्छन्तं पश्यसि हे वरुण सूर्यं त्वं च तेन ध्यानेनास्मानपि भुरण्यतः पश्येत्यर्थः, शकुनिवच्छीघ्रगामी भुरण्युरिति उवट. ॥ ३ ॥

दैव्यावध्वर्यूऽआगतꣳ रथेन सूर्य्यत्वचा ॥ मध्वा यज्ञꣳ समञ्जाथे ॥ ४ ॥

हे देव्यौ अध्वर्यू हे देवसम्बन्धिनी अध्वरनेतारौ इह आगतं आगच्छतं केन सूर्यत्वचा सूर्यदीप्तिमता रथेन सूर्यस्येव त्वक्दीप्तिर्यस्य सः सूर्यत्वक् तेन आगत्य च मध्वा मधुस्वादवता हविषा

सोमपुरोडाशद्रव्यादिना यज्ञं समंजाथे सम्यक्चयतं सम कुरुत अंजेरेतद्रूपम्, प्रभूतानि हवींषि कुरुतइत्यर्थः ॥ ४ ॥

चित्रन्देवानामिति व्याख्यातम् ।

तम्प्रत्क्नथा पूर्व्वथा विश्श्वथेमथा ज्ज्येष्ठतातिम्बर्हिषदंᳩ स्वर्विदम् ॥ प्रतीचीनं वृजनन्दोहसे धुनिमाशुञ्जयन्त मनु यासु वर्द्धसे ॥ ५ ॥

तमिति हे सोमयाग यासु दिक्षु येषु यजमानेषु अनुवर्द्धसे पुनः संस्क्रियसे तासु तदीयासु क्रियासु व्यवस्थितः सन् प्रतिचीनमात्मनोऽभिमुखं इन्द्रं अवस्थाप्य स्ववीर्येण स्थापयित्वा अस्मै यजमानाय वृजनं बलवद्यज्ञफलं दोहसे पूरयसि कथं प्रत्नथा उपमार्थीयः, प्रत्नशब्दः पुराणवचनः तथा च चिरन्तनानामिव ऋषीणामित्यर्थः पूर्वथा पूर्वेषामिव ऋषिणां साध्यानां विश्वथा विश्वेषामिव ऋषीणां इमथा इदानीं तनानां ऋषीणामित्यर्थः इन्द्रं किं भूतं ज्येष्ठतातिं उत्कृष्टविस्तारं अथ वा ज्येष्ठप्रशस्यं बर्हिषदं बर्हिषि तिष्ठन्तं स्वर्विदं स्वर्लोकं जानन्तं तद्वासित्वात् धुनिं कंपयितारं शत्रूणामिति शेषः धूञ् कंपने आशुं जयन्तं शीघ्रं जयशालिनं जेतव्यानीति शेषः ॥ ५ ॥

अयँ व्वेनश्चोदय त्पृश्निगर्भा ज्योतिर्ज्जरायूरजसो व्विमाने ॥ इममपाᳩ सङ्गमेसूर्य्यस्य शिशुन्न विप्प्रा मतिभी रिहन्ति ॥ ६ ॥

अयं वेन: कान्तन्द्रस्वमाइति यावत् पृश्निगर्भा आपः चोदयत् प्रेरयति पृश्निर्द्युलोकः सूर्यो वा तस्य गर्भे तिष्ठतीति पृश्निगर्भाः, वेनइति विनकान्तावित्यस्य प्रयोगः, चन्द्रमाः किं भूतः ज्योतिर्जरायुः ज्योतिरिव जरायुवत् गर्भपुटवन्धकस्य कस्मिन् समये रजसः जलस्य विमाने त्यागसमये ग्रीष्मान्तइत्यर्थः, इममेव सोमं अपां सूर्यस्य देवस्य विमानानां सङ्गमे सति गृहीताभिरद्भिरभिषुवतति विलक्षणाभिष्टुतं मेधाविनो विप्रा मतिभिः मतिपूर्वकवाग्भिः रिहन्ति स्तुवन्ति वसतीव या आपः अपां सङ्गमे सूर्यस्य च गृह्यन्ते, 'ता वहन्तीनां स्यन्दमानानां गृह्णीयाद्दिवा गृह्णीयादिति ॥ ६ ॥

चित्रं देवानामिति व्याख्यातं सूर्योपस्थाने ॥ ७ ॥

आ नऽइडाभिर्व्विदथे सुशस्ति व्विश्वानरः सविता देवऽएतु ॥ अपि यथा युवानो मत्सथानो व्विश्वञ्जगदभिपित्वे मनीषा ॥ ८ ॥

सविता देवः न अस्माकं विदथे यज्ञे तथा तेन प्रकारेण आ एतु आगच्छत इडाभिः यज्ञकारणभूताभिः सुशस्तिभिः शोभनशंसनेहेतुभूतैः सविता किं भूतः विश्वानरः विश्ववर्तिनो जनान् स्वतएव रक्षकः स्वपादित्युवटः तथा कथमपि यथा येन प्रकारेण हेतुना हे युवानः कर्मक्षमाः आगमनकाले अपरिणामिनः अवृद्धाः देवाइति यावत् नः कृते विश्वं जगत् सर्वं जगत् मत्सथ तर्पयथ अभिपित्वे अभिपतनकाले अन्नाय वो कया मनीषया बुद्ध्या ॥८॥

यद॒द्य कच्च॑ वृत्रहन्नु॒दगा॑ ऽअ॒भिसू॑र्य्य ॥
सर्व्वं॑ तदि॑न्द्र ते॒ वशे॑ ॥९॥

हे सूर्य वृत्रहन् ( १ ) वृत्रमौर्वरं तमस्तस्य हन्तः अद्य यत् यत्र कच्च कुत्र चित् त्वं अभ्युदगाः अभ्युदेषि हे इन्द्र सूर्य परमेश्वर तत्सर्वं तव वशे वर्त्तते तत्र त्वमेवैकईश्वरो नान्यइत्य-भिप्रायः ॥ ९ ॥

त॒रणि॑र्व्वि॒श्वद॑र्शतो ज्योति॒ष्कृद॑सि सूर्य्य ॥
विश्व॒मा भा॑सि रोच॒नम् ॥१०॥

हे सूर्य त्वं तरणिः ऊर्ध्वं तूर्णं प्रवर्तसे विश्वदर्शतः विश्वस्य सर्वस्य दर्शनीयः ज्योतिष्कृत् ज्योतिषां कर्तासि अतस्त्वामित्थं भूतं ब्रूमः त्वमेव विश्वं सर्वं जगत् आभासि दीपयसि विश्वं कथं भूतं रोचनं दीप्यमानं अग्निविद्युन्नक्षत्रादिरूपेण त्वमेव सर्वत्र भासीत्यर्थः ॥ १० ॥

( १ ) वृत्रो मेघे ध्वरौ ध्वान्ते दानवे वासवे रिपौ इति विश्वकोशात् ॥

तत्सूर्य्य॑स्य दे॒वत्वं तन्म॑हि॒त्वं म॒द्ध्या
कर्त्तो॒र्व्वित॑तं॒ सञ्ज॑भार ॥ य॒देदयु॑क्त ह॒रित॑ः
स॒धस्था॒दाद्रात्री॒ वास॑स्तनुते सि॒मस्मै॑ ॥११॥

सूर्यस्य तदेव देवत्वं तदेव महित्वं महिमा तत्कर्त्तोः कर्मणो मध्ये विततं रश्मिजालं कल्पान्तइवान्तकाले संजभार संजहार

अन्ते नान्यएवं नाप्नोति तन्नीतं नोपहर्तुमित्यभिप्रायः किंच यदा यत्र इत् एव मध्यस्थात् रश्मीनां सह स्थानात् अर्थात् पृथिव्यादिलोकत्रयात् ते हि तत्र निपतन्ति अतस्तस्मात् हरितवर्णान् स्वान् यदा रश्मीन् आत्मनि अयुक्त युक्तवान् आत्मसंस्थान् करोत् आद्राप्नोति आत् अथ सिमस्मै सर्वस्मै जगते रात्रीवास. तमोमयं वासः तनुते विस्तारयति एवमेकत्रादित्यसहितं ज्योतिरन्यत्र तमः आदित्यप्रभावादसतीत्यभिप्रायः ॥ ११ ॥

तन्मित्रस्य वरुणस्याभिचक्षे सूर्य्यो रूपं
कृणुते द्योरुपस्थे ॥ अनन्तमन्यद्रुशदस्य पाजः
कृष्णमन्यद्धरितः सम्भरन्ति ॥ १२ ॥

सूर्यो मित्रस्य वरुणस्य च अभिचक्षेऽभिदर्शनाय द्योः द्युलोकस्य उपस्थे सङ्गते तत् रूप कृणुत मण्डलाकृतिरूपं करोतीत्यर्थः, मित्रो हि सुकृतिनोऽनुगृह्णातिः वरुणो दुष्कृतिन. सूर्योदये हि एवमनेन प्रकारेण तौ जगदनुगृह्णीतइत्यर्थः, किं च अस्य सूर्यस्यात्पाजः रूपं हरित इन्द्रियवृत्तयः सम्भरन्ति सँहितं बिभ्रति रूपं किं भूतं अनन्तं अपर्यंतं कालतो देशतश्च रुशत् शुक्लं जरामरणाद्ययुक्तं विज्ञानघनानन्दमयमित्यर्थः, पुनः किं भूतं कृष्णं अन्यच्च द्विविधमित्यर्थः ॥ १२ ॥

व्वण्णमहाँ २॥ ऽअसि सूर्य्यवडादित्य महाँ २॥
ऽअसि ॥ महस्ते मतो महिमा पनस्य तेऽद्धा
देव महाँ २॥ ऽअसि ॥ १३ ॥

हे सूर्य वट् सत्यं महानसि महदसि ब्रह्मेत्यर्थः हे आदित्य वट् सत्यं महानसि तेजसइति शेषः किं च महः महतः ते म हिमा महाभाग्यं सर्वभेतेष्ववस्थितं सर्वैः प्राणिभिः पनस्यते पूज्यते अतः हे देव दानक्रीडादियुक्त अद्धा तत्वतः महानसि अभ्यासे भूयांसमर्थमन्यत् यथा दर्शनीयोऽर्थनीयो न पुनरुक्तिदोषः, वट्सूर्य इति ॥ १३ ॥

व्वट् सूर्य्य श्रवसा महाँ २॥ ऽअसि सत्रा
देव महाँ २॥ ऽअसि २॥ मह्ना देवाना
मसुर्य्यः पुरोहितो व्विभुज्ज्यो

४
तिरदाभ्यम् ॥ १४ ॥

हे सूर्य वट् सत्यं श्रवसा श्रवणीयेन बलेन महानसि हे देव सत्रा सत्यं महानसि किं च मह्ना स्वकीयमहत्वेन देवानां मध्ये असुर्यः असि असुरस्यास्तीति असुरः प्राणस्तस्मै हितः सः सूर्यः "उगीवादिभ्यो यत्" प्राणिनां हितइत्यर्थः पुरोहितः पुरएनं दधातीति सर्वकर्मस्विति पुरोहितः प्रथमपूज्यः किं च विभुर्व्यापकः अदभ्यं अनुपहिंस्यं ज्योतिः विज्ञानघनानन्दमयमित्यर्थः ॥ १४ ॥

श्रायन्तऽइव सूर्य्यँ व्विश्वेदिन्द्रस्य भक्षत ॥
व्वसूनि जाते जनमानऽओजसा प्प्रति
भागन्न दीधिम ॥ १५ ॥

यथा सूर्यरश्मयः आयन्ते किं च इन्द्रस्य इन्द्रसम्बन्धीनि इन्द्रानुज्ञातानि सूर्यं अभक्षत भजन्ते एवं वयमपि सूर्यं समाश्रिताः तदुपष्टंभात् विश्वानींद्रस्य धनानि पुत्रपौत्रप्रपौत्रादौ जनमाने जनिष्यमाणे भविष्यत्काले ओजसा बलेन ज्ञानसमुच्चयकारितया प्रतिभागं नकारउपमार्थीयः प्रतिपुरुषं भागमिव दीधिमः स्थापयामः दधातेरेतद्रूपं न ध्यायतेः ॥ १५ ॥

अद्या देवा उदिता सूर्य्यस्य निरंहं-
हसः पिपृता निरवद्यात् ॥ तन्नो
मित्रो वरुणो मामहन्तामदितिः
सिन्धुः पृथिवी उत द्यौः ॥ १६ ॥

हे सूर्यं दूरे वा रश्मयः उदिताः उदयकालीनाः अद्य अंहसः पापान्निष्पिष्य निर्मुच्य निर्मोचयत् अस्मानिति शेषः, अवद्याच्च निःपिपृत अवद्यमवाच्यं तत् हेतो वरुणः मित्रश्च मा मां महंतां पूजयंतां उत अपि अदितिः सिंधुः पृथिवी द्यौश्च महंतां पूजयंतु अकारे विसर्ग लोपश्छांदसः ॥ १६ ॥

आ कृष्णेन रजसा वर्त्तमानो निवेशयन्नमृतं
मर्त्यं च ॥ हिरण्ययेन सविता रथेना
देवो याति भुवनानि पश्यन् ॥ १७ ॥

सविता ऽऽयात्यागच्छति किं भूतः सविता देवः स्तुतिदीप्ति क्रीडायुक्तः केनायाति रथेन किं भूतेन हिरण्मयेन सौवर्णेन किं

कुर्व्वन् भुवनानि पश्यन् भुवनवर्त्तिलोकान् पुण्यपापकर्तॄन् चिप्र-क्षिरीक्षमाणइत्यर्थः न केवलमेवं किं तु अमृतं देवं मर्त्यं मनुष्यं च निवेशयन् स्वे स्वे व्यापारइति शेषः, मनुष्याः सूर्य्योदये यागादिभिर्देवान् प्रीणयन्ति पुनः किं भूताः सविताऽऽवर्तमानः पुनस्तमेव देशमागच्छन् केन सह रजसा रात्रिकालेन प्रायो रात्रिकाले पुण्यकर्मणां मनुष्यादीनां रात्रेः क्षणमुक्तं अयं वाक्यार्थः यः सविता देवः देवमनुष्यव्यापारस्थापकः यश्च पुण्यपापसाक्षी तस्यार्चादिकमुचित्तमति ॥ अत्र आयाति व्यवहितेनाङा सम्बन्धः आवर्तमानइत्यत्र छन्दसि "व्यवहिताश्चेति पाणिनीयसूत्रात्" हिरणमयार्थे निपातः ॥ १७ ॥

इति षडंगी चतुर्थः ॥ अथ शतरुद्रियं व्याख्यायते ॥

नमस्ते रुद्र मन्यव ऽउतोत ऽइषवे नमः ॥
बाहुभ्यामुत ते नमः ॥ १ ॥

रुद्रमुपशान्तयति हे रुद्र यद्रोदनं रु दुःखं द्रावयति नाशयति इति रुद्रः यद्वा रुद्रमुपशान्तयति ये गत्यर्थास्ते ज्ञानार्थाः रवणं रुत् ज्ञानं भावे क्विप् तुगागमः रुत् ज्ञानं राति ददातीति रुद्रः हे रुद्र ते तव मन्यवे क्रोधाय नमोऽस्तु उतोत समुच्चयेऽपि च ते तव इषवे वाणाय नमः उतापि च ते तव बाहुभ्यां नमः अस्त्विति सर्वत्राध्याहार्य्यम् सर्ववाक्यं क्रियया परिसमाप्यत इति न्यायात् तव क्रोधवाणहस्ता अस्मदरिष्वेव प्रसरन्तु नास्मास्वित्यर्थः ॥ १ ॥

या ते॑ रुद्र शि॒वा त॒नूरघो॒राऽपा॑पकाशिनी ॥
तया॑ नस्त॒न्न्वा शन्तमय॒ा
गिरि॑शन्ता॒भि॒चा॑कशीहि ॥ २ ॥

हे रुद्र या ते तव ईदृशी तनूः शरीरं हेगिरिशन्त तया तन्वा नोऽस्मान ऽभिचाकशीहि अभिपश्य अभिचाकशीहि, पश्यति कर्मा, कीदृशी तनूः शिवा शान्ता मङ्गलरूपा यतः अघोरा ऽविषमा सौम्याअतएव अपापकाशिनी पापमसुखं काशयति प्रकाशयति पापकाशिनो न पापकाशनी अपापकाशिनी या पुण्यफलमेव ददाति न पापफलमित्यर्थः, गिरौ कैलाशे स्थितः शं सुखं प्राणिनां तनोति विस्तारयतीति गिरीशन्त गिरि वाचि स्थितः । शं तनोति वा गिरौ मेघे स्थितो वृष्टिद्वारेण शन्तनोति, वा गिरौ शेते गिरिशः शमति गच्छति जानातीति वा शंतः सर्वज्ञः ( शमगती ) भजने शब्दे च कर्तरि क्तः गिरिशश्चासावंतश्च गिरिशन्तः तत्संबुद्धिरिति गिरिशन्त "शकंध्वादित्वात्पररूपं" कीदृश्या तन्वा शन्तमया सुखतमया सुखयितृतमया ॥ २ ॥

यामिषु॑ङ्गिरिशन्त॒ हस्ते॑ बि॒भर्ष्यस्त॑वे ॥
शि॒वाङ्गि॑रित्र॒ तांकु॑रु मा हि॑ꣳसीः
पुरु॑षञ्जग॑त् ॥ ३ ॥

हे गिरिशन्त या मिषुं वाणं हस्ते विभर्षि धारयसि किं कर्तुं अस्तवे (असुक्षेपणे) तुमर्थे तवे प्रत्ययः असितुं शत्रून्प्रति क्षेप्तुमित्यर्थः

हे गिरित्र गिरौ कैलाशे स्थितो भूतानि त्रायते इति तत्संबुद्धिः तां इषुं शिवां कल्याणकारिणीं कुरु किं च पुरुषं पुत्रपौत्रादिकं जगज्जंगममन्यदपि गवाश्वादिकं मा हिंसी मा बधीः ॥ ३ ॥

शिवेन वचसा त्वा गिरिशाच्छा वदामसि ॥
यथा नः सर्वमिज्जगदयक्ष्मं
सुमनाऽअसत् ॥ ४ ॥

गिरौ कैलाशे शेते गिरिशः हे गिरिश शिवेन वचसा मङ्गलरूपेण वचनेन त्वा त्वां अच्छ त्वां प्राप्तुं वयं वदामसि वदामः प्रार्थयामहे, (अच्छाभेराप्तुमिति) शाकपूणिः, संहितायां निपातस्य दीर्घः इदंतोमसि, किं वदाम इत्यतआह नोऽस्माकं सर्वमेव जगत् जङ्गमादि नराः पश्वादि येन प्रकारेण अच्छ पूर्वो वदतिरभिवादने वर्तते इति शाकपूणिः, अयक्ष्मं नीरोगं व्याधिरहितं यक्ष्मा व्याधिः सुमनः शोभनं मनः अस्तु भूयात् असत् भवति तथा कुर्विंत्यर्थः सुमनः शब्दे पुंस्त्वं आर्षं जगद्विशेषणत्वात् असदित्यत्र लेटोऽडाटावित्यट् इलोप', इच्छब्दः एवकारार्थे ॥ ४ ॥

अध्यवोचदधिवक्ता प्रथमो दैव्यो
भिषक् ॥ अहींश्च सर्वाञ्जम्भयन्त्सर्वाश्च
यातुधान्यो धराचीः परासुव ॥ ५ ॥
४

अधिशब्दात्तदुपरिभवमैश्वर्य्यं च वहति रुद्रो मां अध्यवोचत् अधिवक्ता ऐश्वर्य्येण वक्ता रुद्रमपि निजपुरुषं अध्यवोचत् मां

सर्वाधिकं वदति अयम् याजकः सर्वाधिको भवत्विति तेनोक्ते मम सर्वाधिक्यं भविष्यत्येवेत्यर्थः कीदृशो रुद्रः अधिवदनशीलः तथा प्रथमः सर्वेषां मुख्यः पूज्यत्वात् दैव्यः देवेभ्यो हितः भिषक्‌रोगनाशकः स्मरणेनैव रोगनाशात् भिषक्त्वम्, शिवं एवं परोक्षमुक्त्वा प्रत्यक्षमाह हे रुद्र सर्वा यातुधान्यः यातुधानो राक्षसोः त्वं परासुव परिक्षिप अस्मत्तो दूरीकुरु किंकुर्वन् सर्वाऽनहीन्सर्पव्याघ्रादीन् जंभयन् 'जंभजृभी गात्र विनामे' विनाशयन् कीदृशीः यातुधानीः अधराचोः अधरे अधो देशेंऽचति ता अधराच्यः ता अधराचीः अधोऽधो गमनशीलाः च समुच्चये सर्पनाशराक्षसीक्षेपौ सहैव कुर्व्वित्यर्थः ॥ ५ ॥

असौ यस्ताम्रोऽअरुणऽउत बभ्रुः सुमङ्गलः ॥
ये चैनꣳ रुद्राऽअभितो दिक्षु श्रिताः
सहस्रशो वैषाꣳ हेडऽईमहे ॥ ६ ॥

आदित्यरूपेणाच रुद्रः स्तूयते अभिनयेन दर्शयन्नाह योऽसौ प्रत्यक्षो रुद्रो रविरूपश्च पुनः ये रुद्राः एनं अभितो दिक्षु प्राच्यादिदिक्षु श्रिताः किरणरूपेण सहस्रशः संख्याः एषां हेडः क्रोधं अस्मदपराधजं वयं अवईमहे अवनयामि निवारयामः भक्त्या निराकुर्मः 'हेडइतिक्रोधनाम' अभि सर्वतसोः इति द्वितीया, कीदृशोऽसौ ताम्रः उदयेऽत्यन्तं रक्तः अरुणः रक्तो ऽस्तकाले उतापि च बभ्रुः पिङ्गलवर्णोऽन्यदा सुमङ्गलं शोभनानि मङ्गलानि यस्य सः मङ्गलरूपं रव्युदये सर्वमङ्गलप्रवर्त्तनात् क्रमेणैतानि रूपाणि दधातीत्यभिप्रायः यद्वा रुद्रएवोच्यते असौ यस्ताम्रः अरुणः सुमङ्गलः प्रयो-

हे गिरित्र गिरौ कैलासे स्थितो भूतानि त्रायते इति तत्संबुद्धिः तां इषुं शिवां कल्याणकारिणीं कुरु किं च पुरुषं पुत्रपौत्रादिकं जगज्जंगममन्यदपि गवाश्वादिकं मा हिंसी मा वधीः ॥ ३ ॥

शिवेन वचसा त्वा गिरिशाच्छा वदामसि ॥
यथा नः सर्वमिज्जगदयक्ष्मं
सुमना असत् ॥ ४ ॥

गिरौ कैलाशे शेते गिरिशः हे गिरिश शिवेन वचसा मङ्गलरूपेण वचनेन त्वा त्वां अच्छ त्वां प्राप्तुं वयं वदामसि वदामः प्रार्थयामहे, (अच्छाभेराप्तुमिति) शाकपूणिः, संहितायां निपातस्य दीर्घः इदंतोमसि, किं वदाम इत्यतआह नोऽस्माकं सर्वमेव जगत् जङ्गमादि नराः पश्वादि येन प्रकारेण अच्छ पूर्वो वदतिरभिवादने वर्तते इति शाकपूणिः, अयक्ष्मं नीरोगं व्याधिरहितं यक्ष्मा व्याधिः सुमनः शोभनं मनः अस्तु भूयात् असत् भवति तथा कुर्वित्यर्थः सुमनः शब्दे पुंस्त्वं आर्षं जगद्विशेषणत्वात् असदित्यत्र लेटोऽडाटावित्यट् इलोप', इच्छब्दः एवकारार्थे ॥ ४ ॥

अध्यवोचदधिवक्ता प्रथमो दैव्यो
भिषक् ॥ अहींश्च सर्वाञ्जम्भयन्त्सर्वाश्च
यातुधान्यो धराचीः परासुव ॥ ५ ॥

४

अधिशब्दात्तदुपरिभवमैश्वर्यं च वहति रुद्रो मां अध्यवोचत् अधिवक्ता ऐश्वर्येण वक्ता रुद्रमपि निजपुरुषं अध्यवोचत मां-

सर्वाधिकं वदति अयम् याजकः सर्वाधिको भवत्विति तेनोक्ते मम सर्वाधिक्यं भविष्यत्येवेत्यर्थः कीदृशो रुद्रः अधिवदनशीलः तथा-प्रथमः सर्वेषां मुख्यः पूज्यत्वात् दैव्यः देवेभ्यो हितः भिषक्रोगनाशकः स्मरणेनैव रोगनाशात् भिषक्त्वम्, शिवं एवं परोक्षमुक्त्वाप्रत्यक्ष-माह हे रुद्र सर्वा यातुधान्यः यातुधानीराक्षसीः त्वं परासुव परि-क्षिप अस्मत्तो दूरीकुरु किंकुर्वन् सर्वाऽनहीन्सर्पव्याघ्रादीन् जंभ-यन् 'जंभजृभी गात्र विनामे' विनाशयन् कीदृशीः यातुधानीः अधराचीः अधरे अधो देशेऽचति ता अधराच्यः ता अधराचीः अधोऽधो गमनशीलाः च समुच्चये सर्पनाशराक्षसीक्षेपौ सहैव कुर्वित्यर्थः ॥ ५ ॥

असौ यस्ताम्रोऽअरुणऽउत बभ्रुः सुमङ्गलः ॥
येचैनꣳ रुद्राऽअभितो दिक्षु श्रिताः
सहस्रशो वैषाꣳ हेडऽईमहे ॥ ६ ॥

आदित्यरूपेणात्र रुद्रः स्तूयते अभिनयेन दर्शयन्नाह योऽसौ प्रत्यक्षो रुद्रो रविरूपश्च पुनः ये रुद्राः एनं अभितो दिक्षु प्राच्यादि-दिक्षु श्रिताः किरणरूपेण सहस्रशः संख्याः एषां हेडः क्रोधं अस्म-दपराधजं वयं अवईमहे अवनयामि निवारयामः भक्त्या निरा-कुर्मः 'हेडइतिक्रोधनाम' अभि सर्वतसोः इति द्वितीया, कीदृशोऽसौ ताम्रः उदयेऽत्यन्तं रक्तः अरुणः रक्तो ऽस्तकाले उतापि च बभ्रुः पिङ्गलवर्णोऽन्यदा सुमङ्गलं शोभनानि मङ्गलानि यस्य सः मङ्गल-रूपं रव्युदये सर्वमङ्गलप्रवर्त्तनात् क्रमेणैतानि रूपाणि दधातीत्य भिप्रायः यद्वा रुद्रएवोच्यते असौ यस्ताम्रः अरुणः सुमङ्गलः प्रयो-

जनवशान्नानारूपाणि करोति यद्वा क्रोधेन ताम्रः क्रमात् क्रोध- शमेन यादृशं रूपं तादृशमाश्रयति ॥ ६ ॥

असौ यो॑ऽवसर्प्प॑ति नील॑ग्रीवो विलो॑हितः॥
उतैनं॑ गोपाऽअदृश्रन्नदृ॑श्रन्नुदहार्य्यः
स दृष्टो मृ॑डयाति नः॥ ७ ॥

योऽसावादित्यरूपो रुद्रोऽवसर्प्पति उदयास्तमयौ कुर्वन्निरं तरं गच्छति गोपाः उत अप्यर्थे गवां प्रवेशकालं मन्यमानाइत्यर्थः उत गोपालाः वेदोक्तसंस्कारहीना अपि अदृश्रन्पश्यंति एनं उद हार्य्यः उदकं हरंति यास्ताः "मंथौदनसक्तुविंदवज्राहारवीवधगा हेषु" इति उदकस्योदादेशः, जलहारिण्यो योषितोऽपि एनं अदृ- श्रन्पश्यन्ति आगोपालांगनाप्रसिद्धः एषइत्यर्थः दृशेर्लुङि "इरितो- वेति" च्लेरङ् रुगागमः छान्दसः कोदृशोऽसौ नीलग्रीवः विषधार- णेन नीलग्रीवा कंठो यस्य अस्तमयेऽयं सूर्य्यः नीलकंठ इव लक्ष्यः विलोहितः विशेषेण रक्तः स रुद्रः दृष्टः सन् नोऽस्मान्मृडयत सुख- यतु असौ मंडलवर्ती सविता रुद्रएव तपतीति ज्ञातः सुखं करो- त्वित्यर्थः ॥ ७ ॥

नमो॑ऽस्तु नील॑ग्रीवाय सहस्राक्षाय॑
मीढुषे॑ ॥ अथो ये॑ऽअस्य
सत्त्वा॑नोऽहन्तेभ्यो॑ करन्नमः ॥८॥

श्रीनीलकंठाय नीलग्रीवाय रुद्राय नमोऽस्तु किं भूताय सह स्राक्षाय बह्वक्षाय इन्द्रस्वरूपिणे मीढुषे मेहतीति मीढुष् तस्मै मो-

ढुषे, मिहिषे च ने, इत्यस्मा"द्वाभ्वांह्वाभ्मीढ्वाभ्वेति" क्वसंतो निपातः, सेक्त्रे वृष्टिकर्त्रे पर्जन्यरूपायेत्यर्थः तरुणाय वा अथो अपि च अस्य रुद्रस्य ये सत्वानः प्राणिनो भृत्यास्तेभ्योऽहं नमो नमस्कारं अकरं करोमि क्रत्कती प्रमुङि उत्तमैकवचनं 'मिहसेचने' अपरिणामित्वेन स्तूयते इति भावः ॥ ८ ॥

प्रमुञ्च धन्वनस्त्वमुभयोरार्त्न्योर्ज्याम् ॥
याश्च ते हस्तऽइषवः परा ता भगवो वप ॥९॥

हे भगवः भगं षड्विधं ऐश्वर्यमस्त्यस्येति भगवान् "मतुवसोरुः सम्बुद्धौ छन्दसीति रुत्वं, ऐश्वर्यस्य समग्रस्येत्याद्युक्तत्वात् हे भगवन् रुद्र तव धन्वनः उभयोरार्त्न्योर्द्वयोः कोट्योः स्थितां ज्यां मौर्वीं त्वं प्रमुञ्च दूरीकुरु याश्च ते तव हस्ते इषवो बाणाः ताः इषूः परासुव पराक्षिप ॥ ९ ॥

विज्यन्धनुः कपर्दिनो विशल्यो
बाणवाँ २॥ ऽउत ॥ अनेशन्नस्य याऽइषवऽ
आभुरस्य निषङ्गधिः ॥ १० ॥

अस्य कपर्दिनः कपर्दो जटाजूटोऽस्यास्तीति कपर्दी तस्य रुद्रस्य धनुः विज्यमस्तु विगतगुणं भवतु बाणवानिषुधिः विशल्योऽस्तु विगतशल्योऽस्तु शल्यः फलं बाणाः सन्त्यस्येति बाणवान् उतापि च अस्य या इषवः शराः ता अनेशन् नष्टं भवन्तु 'नश अदर्शने' किंच अस्य निषङ्गधिः खड्गकोशः आभुः रिक्तोस्तु निषज्यते इति निषङ्गः खड्गः संनिधीयतेऽस्मिन्निति निषङ्गधिः खड्गकोशः ॥ १० ॥

या ते हेतिर्मीढुष्टम हस्ते बभूव ते धनुः ॥
तयाऽस्मान्विश्वतस्त्वमयक्ष्मया परिभुज ॥११॥

अतिशयेन मीढ्वान्मीढुष्टमः तसीमत्वर्थइति भसंज्ञायां वसोः संप्रसारणं षत्वष्टुत्वे हे मीढुष्टम सेक्तृतम ववर्षुक ते तव हस्ते या धनुर्हेतिः धनूरूपमायुधं बभूव स्थितः एकं तेपदं पादपूरणाय तया धनूरुपया हेत्या विश्वतः सर्वतः अस्मान् त्वं परिभुज परिपालय 'भुजेर्विकरणव्यत्यये शप्रत्ययः' कीदृश्या तया अयक्ष्मया न यक्ष्मा रोगो यस्याः तया निरुपद्रवया दृढ़या अनुपद्रवकारिण्या वा ॥११॥

परि ते धन्वनो हेतिरस्मान्वृणक्तु
विश्वतः ॥ अथो यऽइषुधिस्तवारे
ऽअस्मन्निधेहि तम् ॥ १२ ॥

हे रुद्र ते तव धन्वनो हेतिः धनुः सम्बन्धि आयुधं विश्वतः सर्व्वतः अस्मान् परिवृणक्तु त्यजतु मा हन्तु इत्यर्थः 'वृजीवर्जने' रुधादित्वात् श्नम्, अथो अपि च यस्तव इषुधिः बाणः अस्मात् अस्मत्तः सकाशात् आरे दूरे निधेहि अस्मत्तो दूरे स्थापयेत्यर्थः ।

अवतत्य धनुष्ट्वꣳ सहस्राक्ष शतेषुधे ॥
निशीर्य्य शल्यानाम्मुखा शिवो नः सुमना
भव ॥ १३ ॥

सहस्रंअक्षीणि यस्य सः सहस्राक्षः तत्सम्बुद्धिः हे सहस्राक्ष शतं इषुधयो यस्य सः शतेषुधिः तत्सम्बुद्धिः हे शतेषुधे त्वं नोऽस्मान् प्रति शिवः शान्तः सुमनाः शोभनचित्तश्च भव अनुग्रहकारो-

त्यर्थः किं कृत्वा धनुः अवतत्य अपज्याकं कृत्वा अवतार्य्य किं च शल्यानां फलानां मुखा मुखानि बाणफलाग्राणि निशीर्य्य शीर्णानि कृत्वा 'शृहिंसायां' 'समासेऽनञ्पूर्वकाले क्त्वोल्यप्' "ऋतद्धातो." ॥ १३ ॥

नमस्तऽआयुधायानातताय धृष्णवे ॥
उभाभ्यामुत ते नमो बाहुभ्यान्तव धन्वने ॥ १४ ॥

हे रुद्र ते तव आयुधाय नमोऽस्तु धनुषे बाणाय नतिरस्तु कीदृशायायुधाय अनातताय धनुषि अनारोपिताय धृष्णवे धर्षणशीलाय 'धृषेः क्नुप्रत्ययः' रिपून् हन्तुं प्रगल्भाय उतापि च ते तव उभाभ्यां बाहुभ्यां नमः ते तव धन्वने धनुषेऽपि नमोऽस्तु तस्यापि विशेषणं अनातताय अवतारितमौर्वीकाय पुनः पुनर्नमस्कारः आदरातिशयेन ॥ १४ ॥

मा नो महान्तमुत मा नोऽ अर्भकम्मा नऽउक्षन्तमुत मा नऽउक्षितम् ॥ मा नो वधीः पितरम्मोत मातरम्मा नः प्रियास्तन्वो रुद्र रीरिषः ॥ १५ ॥

४

हे रुद्र नः अस्माकं महान्तं वृद्ध गुरुपितृव्यादिकं त्वं मा वधीः मा हिंसीः उत अपि नः अस्माकं अर्भकं बालं मा वधीः च नः उक्षन्तं सेचन्तं तरुणं मा वधीः उत अपि नः उक्षितं सिक्तं गर्भस्थं

च मा बधीः नः पितरं जनकं मा बधीः उत अपि नो मातरं जननीं मा बधीः महान्तः इत्यनेन सिद्धयोर्मातापित्रोः पुनः पुनरुपादानमादरार्थे नः प्रिया वल्लभाः तन्व तनूः शरीराणि पुत्रपौत्ररूपाणि त्वं मा रीरिषः मा हिंसीः रिषतिर्हिंसार्थः ॥ १५ ॥

मा न॒स्तो॒के तन॑ये॒ मा न॒ऽ आयु॑षि॒ मा
नो॒ गोषु॒ मा नो॒ऽ अश्वे॑षु रीरिषः॑ ॥ मा
नो॑ वी॒रान्रु॑द्र भा॒मिनो॑ वधीर्ह॒विष्म॑न्तः॒
सद॒मित्त्वा॑ हवामहे ॥ १६ ॥

हे रुद्र नः तोके पुत्रे तनये पौत्रे मा रीरिषः तद्विधं हिंसां मा कुर्व्वित्यर्थः नः आयुषि जीवने मा हिंसीः; नः गोषु धेनुषु मा रीरिषः नः अश्वेषु तुरगेषु च मा रीरिषः 'विभक्तिव्यत्ययो वा' तोकं तनय आयुः मा अश्वान् हिंसीः किं च 'भामक्रोधे' भामिनः क्रोधयुतानपि नोऽस्माकं वीरान् भृत्यान् मा वधीः कउपकारइति चेत्तत्राह यतः हविष्मतो हविर्युक्ताः सद सदाकालं इच्छब्दः एवकारार्थे सदैव त्वा त्वां वयं हवामहे यागाय आह्वयामः त्वदेकशरणा वयमिति भावः ॥ १६ ॥

नमो॑ हिर॑ण्यबाहवे सेना॒न्ये दि॒शां च॒
 ४
पत॑ये॒ नमो॒ नमो॑ वृक्षेभ्यो॒ हरि॑केशेभ्यः॒
पशूनाम्पत॑ये॒ नमो॒ नमः॑ शष्पिञ्ज॑राय॒
त्त्विषी॑मते पथी॒नाम्पत॑ये॒ नमो॒ नमो॒हरि॑के-
शायोपवी॒तिने॑ पु॒ष्टाना॒म्पत॑ये॒ नमः॑ ॥१७॥

अतः परं तिस्रोऽभ्रोतयो रुद्राणां द्वयोर्द्वयोर्नमस्कार एकैकस्यां कण्डिकायां अष्टावष्टौ रुद्राः तेषु येऽभ्यान्ततरास्तेषाभमुयतो नमस्कारः, हिरण्यमाभरणरूपं बाहो यस्य स हिरण्यबाहुः स च सेनान्नयतीति सेनानीः तस्मै रुद्राय नमः दिशां च पतये पालकाय रुद्राय नमः हरयो हरितवर्णाः केशाः पर्णरूपाः येषां ते हरिकेशाः तेभ्यः वृक्षेभ्यो वृक्षरूपरुद्रेभ्यो नमः पशूनां जीवानां पतये पालकाय रुद्राय नमः शष्पिञ्जराय शष्पस्वालक्षणं तद्वत्पिञ्जराय पीतरक्तवर्णाय टिलोपश्छान्दसः त्विषिर्दीप्तिरस्यास्तीति त्विषिमान् तस्मै त्विषीमते 'संहितायां शृणुतेति प्रातिशाख्यसूत्रेण त्विषिशब्दस्य दीर्घः, ईद्दशाय रुद्राय नमः पथीनां मार्गाणां पतये पालकाय नमः 'पन्थामिति प्राप्ते छान्दसं रूपं' पथिशब्दो मार्गवाची उत्तरदक्षिणद्वतीया मार्गाः श्रुतावुक्ता हरिकेशाय नीलवर्णकेशाय जरारहितायेति यावत् उपवीतिने मङ्गलार्थं यज्ञोपवीतधारिणे रुद्राय नमः पुष्टानां गुणपूर्णानां नराणां पतये स्वामिने नमः ॥ १७ ॥

नमो॑ बभ्लु॒शाय॑ व्या॒धिनेऽन्ना॑ना॒म्पत॑ये॒
नमो॒ नमो॑ भ॒वस्य॑ हे॒त्यै जग॑ता॒म्पत॑ये॒ नमो॒
नमो॑ रु॒द्राया॑तता॒यिने॒ क्षेत्रा॑णा॒म्पत॑ये॒ नमो॒
नमः॑ सू॒ताया॒हन्त्यै॒ वना॑ना॒म्पत॑ये॒ नमः॑ ॥ १८ ॥

अत्र नमः संबंधिपदातिरिक्तानि पदानि विशेषणानि ज्ञेयानि एवं सर्वत्र बभ्लुशाय बभ्रुवर्णाय रुद्राय नमः वभ्रुः कपिशः व्याधिनि

विध्यतीति व्याधिस्तस्मै अन्नानां पतये नमः नमो भवस्य हेत्यै भवः संसारस्तस्य हेत्यै आयुधाय संसारछेदकायेत्यर्थः जगतां पतये नमः नमो रुद्राय आततेन धनुषा सह एतीति अच्छतीति आततायी तस्मै उद्यतधनुषे इत्यर्थ. क्षेत्राणां पतये नमः सूर्योदयास्तमनमध्यभूमिः क्षेत्रशब्देनोक्ता इति केचिदाचार्य्या भणंति नमः सूताय सूतः सारथिः तस्मै किं भूताय अहंत्यै न हि कमपि हंतीति अहंता तस्मै वनानां पतये रक्षकाय नमः ॥ १८ ॥

नमो रोहिताय स्थपतये वृक्षाणां पतये
नमो नमो भुवन्तये वारिवस्कृतायौ
षधीनाम्पतये नमो नमो मन्त्रिणे वाणि-
जाय कक्षाणां पतये नमो नमऽउच्चैर्घो
षायाक्रन्दयते पत्तीनाम्पतये नमः ॥ १९ ॥

रोहिताय लोहितवर्णाय रुद्राय नमः स्थपतये गृहादिनिर्माणकर्त्रे वृक्षाणां पतये नमो नमो भुवंतये भुवं पृथ्वीं तनोति विस्तारयति इति भुवंतिः तस्मै वारिवस्कृतायौषधीनां पतये नमो वारिवो रक्षवनं अर्चनं धनंवा तत्कृतं येन सः वारिवस्कृतः तस्मै दोर्घत्वं छान्दसं, औषधीनां धान्यानां पतये नमः नमो मंत्रिणे वाणिजाय वणिजेव वाणिजः कक्षाणां पतये नमः कक्षो नदीकक्षः पर्वतकक्षो वा नमः उच्चैर्घोषाय आक्रंदयते आक्रन्दः शब्दः महा शब्दः पत्तीनां पतये नमो हस्त्यश्वरथपदातिभिः पत्तिरित्युवटः ॥ १९ ॥

नमः कृत्स्नायतया धावते सत्त्वनाम्पतये
नमो नमः सहमानाय निव्याधिन ऽ
आव्याधिनीनां पतये नमो नमो निषङ्गिणे
ककुभाय स्तेनानां पतये नमो नमो निचे-
रवे परिचरायारण्यानां पतये नमः॥ २० ॥

हेतुभूताय धावते रुद्राय नमः कृत्स्नश्चासावायतश्चेति कृत्स्ना-यतस्तस्य भावः कृत्स्नायतता तया अर्थाद्धनुषः तकारलोपश्छान्दसः आकर्णपूरितेन धनुष्टेन इत्यर्थः सत्वनां सत्वानां पतये नमः अ-कारलोपश्छान्दसः, नमः सहमानाय अभिभवनशीलाय निव्याधिने नितरां विध्यति हन्ति शत्रून् निव्याधी तस्मै आव्याधिनीनां पतये नमः आविध्यंतीत्याव्याधिन्यः तासां नमो निषंगिणे खड्ग युक्ताय ककुभाय 'महते ककुभइति महन्नामसु पठितं' स्तेनानां पतये नमः स्तेन. चौरः, नितरां चेरुः निचेरुः तस्मै, परितः चर तीति परिचरः सर्वतो गंता, अरण्यानां मृगाणां पतये नमः ॥२०॥

नमो वञ्चते परिवञ्चते स्तायूनां पतये
नमो नमो निषङ्गिणऽइषुधिमते तस्कराणां
पतये नमो नमः सृकायिभ्यो जिघांसद्भ्यो
मुष्णताम्पतये नमो नमोऽसिमद्भ्यो
नक्तञ्चरद्भ्यो विकृन्तानाम्पतये नमः॥ २१ ॥

वचन्तइति, वंचतिर्गत्यर्थः वंचते गमनशीलाय नमः परिवंचते

सर्वतो गमनशीलाय वंचते वंचकाय प्रकाशतस्करायेति केचित् नम इति सर्वत्र योज्यं, स्तायूनां पतये नमः स्तायुश्चौरविशेषः नमो निषंगिणे खड्गिने इषुधिमते इषुधिस्तूणः तत्सहिताय तस्कराणां पतये नमः तस्करश्चौरविशेषः नमः सृकायिभ्यः सृकइति वज्रनामसु पठितं, सृकेन गृह्णीतेन एतुं शीलमेषामिति सृकायिनः तेभ्यः जिघांसद्भ्यः हन्तुमिच्छद्भ्यः मुष्णतां पतये नमः मुष्णतां चौराणां मुष्णन्तश्चौराः 'मुषस्तेये' नमोऽसिमद्भ्यः असियुक्तेभ्यः रात्रीगच्छद्भ्यः विकृन्तानां विकर्त्तनशीलानां पतये नमः ॥ २१ ॥

नमऽउष्णीषिणे गिरिचरायकुलुञ्चानां पतये
नमो नमऽइषुमद्भ्यो धन्वायिभ्यश्च वो नमो
नमऽआतन्वानेभ्यः प्रतिदधानेभ्यश्च वो
नमो नमऽआयच्छद्भ्योऽस्यद्भ्यश्च वो नमः ॥२२॥

उष्णीषमस्यास्तीत्युष्णीषी उष्णीषं शिरोवेष्टनं, गिरौ चरति पर्वतसंचारिणे नमः कुलुंचानांपतये नमः कुत्सितं कुलानि वा लुंचन्तीति कुलुंचाः कुं पृथ्वीं लुंचन्तीति केचित् नमऽइषुमद्भ्यः वः युष्मभ्यं नमः केभ्यः इषवो विद्यन्ते येषान्ते इषुमंतः तेभ्यः धन्वायिभ्यः धनुषा एतुं शीलमेषामिति धन्वायिनः वा संज्ञायामिति धनुषो वा चकारः समुच्चयार्थः नमऽआतन्वानेभ्यः उत्क्षिप्य कांडानि धनूंषि आततानि कुर्वद्भ्यः प्रतिदधानेभ्यश्च प्रतिदधते सन्दधते वाणान्धनुषीति सन्दधानास्तेभ्यः आयच्छन्त्याकर्षन्ति धनूंषि

ते आयच्छद्भ्यः अस्यन्ति क्षिपन्ति वाणानित्यसन्तस्तेभ्यो नमः असद्भ्यो नमः कांडानि क्षिपद्भ्यः असुक्षेपणे । २२ ॥

नमो विसृजद्भ्यो विध्यद्भ्यश्च वो नमो
नमः स्वपद्भ्यो जाग्रद्भ्यश्च वो नमो नमः
शयानेभ्यऽआसीनेभ्यश्च वो नमो नमस्तिष्ठ-
द्भ्यो धावद्भ्यश्च वो नमः ॥ २३ ॥

विसृजद्भ्यः कांडानि योद्धारं प्रति क्षिपद्भ्यः विध्यद्भ्यः शत्रूं ताडयद्भ्यः नमः स्वपद्भ्यः स्वापंकुर्वद्भ्यः स्वप्नावस्थामनुभवद्भ्यः जाग्रद्भ्यश्चवो नमः शयानेभ्यः शेरते शयानाः सुषुप्त्यवस्थावद्भ्यः आसीनेश्चभ्य वो नमः नमस्तिष्ठद्भ्यो धावद्भ्यो नमः एतानि पदानि निगदव्याख्यातानि अतः परमद्वैतप्रतिपादनाय स्तुतिः ॥ २३ ॥

नमः सभाभ्यः सभापतिभ्यश्च वो नमो
नमोऽश्वेभ्योऽश्वपतिभ्यश्च वो नमो नमऽआव्या-
धिनीभ्यो विविध्यन्तीभ्यश्च वो नमो नम
ऽउगणाभ्यस्तृंहतीभ्यश्च वो नमः ॥ २४ ॥

वः युष्मभ्यं नमः केभ्यः सभाभ्यः सभापतिभ्यश्च सभास्वामिभ्यः नम अश्वेभ्यः अश्वपतिभ्यश्च आव्याधिनीभ्यः आविध्यन्तीत्याव्याधिन्यः सेनास्ताभ्यः विविध्यन्तीभ्यः विशेषेण विध्यन्तीति विविध्यन्त्यः ताभ्यः उगणाभ्यः उन्नतगणाभ्यः सेनाभ्यः एवं उदुपसर्ग-

स्यांत्यलोपश्छान्दसः, तृंहतीभ्यश्च वो नमः तृंहन्ती हिंसाकर्म, हिंसन्तीभ्यः सेनाभ्यः तृंहणंवज्रादिप्रहरणं पाथनं मुसलप्रहारः शस्त्रघातः खड्गादिप्रहारइति हिंसायामेव भेदाः ॥ २४ ॥

नमो गणेभ्यो गणपतिभ्यश्च वो नमो नमो
व्रातेभ्यो व्रातपतिभ्यश्च वो नमो नमो
गृत्सेभ्यो गृत्सपतिभ्यश्च वो नमो नमो
विरूपेभ्यो विश्वरूपेभ्यश्च वो नमः ॥ २५ ॥

गणः समूहः तत्स्वरूपेभ्यो नमः गणपतिभ्यश्च वो नमः नमो व्रातेभ्यः व्रातः समूहमर्हन्तीति व्राताः गणविशेषाएव व्रातपतिभ्यश्च वो नमः नमो गृत्सेभ्यो गृत्सपतिभ्यश्च वो नमः गृत्सो मेधावी नमो विरूपेभ्यो नमः सेनाभ्यः, स्तोमौघनिकरव्रातवारसंघातसंचयाः इत्यमरेणोक्तेः, व्रातः समूहः ॥ २५ ॥

नमः सेनाभ्यः सेनानिभ्यश्च वो नमो नमो
रथिभ्योऽअरथेभ्यश्च वो नमो नमः क्षतृभ्यः
सङ्ग्रहीतृभ्यश्च वो नमो नमो महद्भ्योऽ
अर्भकेभ्यश्च वो नमः ॥ २६ ॥

सेना चमूस्तत्स्वरूपेभ्यो वो नम सेनान्नयन्तीति सेनान्यः तेभ्यः नमो रथिभ्यो रथा येषां ते रथिनः तेभ्यः, अरथिभ्यश्च अरथा रथवर्जिता योद्धारः तेभ्यः, क्षतृभ्यः रथानामधिष्ठातारः तेभ्यः, संगृहीतृभ्यो नमः संगृहीतारः सारथयः नमो महद्भ्यो

महांतो जातिविद्यादिभिरुत्कृष्टा अर्भकेभ्यश्च वो नमः ॥ २६ ॥

नमस्तक्षभ्यो रथकारेभ्यश्च वो नमो नमः

कुलालेभ्यः कर्मारेभ्यश्च वो नमो नमो

निषादेभ्यः पुञ्जिष्ठेभ्यश्च वो नमो नमः

श्वनिभ्यो मृगयुभ्यश्च वो नमः ॥ २७ ॥

रथकारस्तक्षाविशेषः, नम, कुलाला कुम्भकाराः, कर्मारेभ्यः कर्मारा लोहकाराः, नमो निषादेभ्यः निषादा मांसभक्षका धीवरा, (१) पुञ्जिष्ठा जात्यन्तरसंकीर्णा. संकरादयः पुष्कसादयः, तेभ्यः, शुनो नयन्तीति श्वन्यः तेभ्यः 'नयतेर्डिश्वत्वं छान्दसं' श्वग णिनइति यावत् मृगयुभ्यश्च वो नमः मृगान् कामयन्तइति मृगयवः व्याधा 'इदं युरिदं कामयमानइति यास्कः' तेभ्यो मृगयुभ्यो वो नमः ॥ २७ ॥

नमः श्वभ्यः श्वपतिभ्यश्च वो नमो नमो

भवाय च रुद्राय च नमः शर्वाय च पशुपतये

च नमो नीलग्रीवाय च शितिकण्ठाय च॥२८॥

नमः श्वभ्यः श्वपतिभ्यश्च वो नमः उभयतो नमस्काराः स मासाः, वः युष्मभ्यं नमः अस्तु इतउत्तरं रुद्रनामानि नमो भवाय रुद्राय च नमः शर्वाय च पशुपतये च नमो नीलग्रीवाय च नीलः

(१) अस्त्राम्बगोभूमिसव्यादिसूत्रेण स्थप्रत्यये कृते ष्टुत्वे च कृते पुञ्जिष्ठ इति भवति ॥

श्यामो ग्रीवा यस्य स तस्मै शितिकण्ठाय च शितिशब्दः श्वेतपर्य्यायइत्युवट, सुप आत्मनः क्यजिति क्यच् क्यचिचेति प्राप्तस्येत्वस्य न छन्दस्यपुत्रस्येति निषेधः, शितो धवलमेचकौ इति विश्वकोशात् ॥ २८ ॥

नमः कपर्दिने च व्युप्तकेशाय च नमः सहस्राक्षाय च शतधन्वने च नमो गिरिशयाय च शिपिविष्टाय च नमो मीढुष्टमाय चेषुमते च ॥ २९ ॥

जटाजूटधारिणे नमः व्युप्तकेशाय च विशेषेण उप्ता मुण्डिताः केशा यस्य स व्युप्तकेशस्तस्मै, सहस्राक्षाय बह्वक्षाय, शतधन्वने नमः बहुधन्वने गिरौ शेते गिरिशयस्तस्मै, शिपिविष्टाय विष्णुरूपाय, विष्णुः शिपिविष्टइतिश्रुतेः, यद्वा शिपिषु पशुषु विष्टः प्रविष्टः पशवो वै शिपिरितिश्रुतेः, सर्वान्तर्यामितया स्थितइत्यर्थः, यद्वा शिपिर्यज्ञ आदित्यो वा रश्मिर्वा तैराविष्टो भवतीति निरुक्तकारयास्कोक्तेः स्वनतिरभिधेयः उदितमात्रआदित्यः स्तूयते शिपिविष्टेन शब्देन वाणा रश्मयउच्यन्ते मीढुष्टमाय सेक्तृतमाय यूने परिणामरहितायेत्यर्थः इषुमते बाणयुक्ताय ॥ २९ ॥

नमो ह्रस्वाय च वामनाय च नमो बृहते च वर्षीयसे च नमो वृद्धाय च सवृधे च

नमोऽग्र्या॑य च प्रथमाय॑ च ॥ ३० ॥

ह्रस्वो लघुप्रमाणकः तस्मै, वामनाय संकुचितावयवाय, बृहते वर्षीयसे "प्रस्थस्फेत्यादिना वर्षादेशः, वृद्धतराय वृद्धाय सवृधे समानवयसे, अग्रे भवोऽग्रः अग्राद्यत् इत्यनेन यत्प्रत्यः, प्रथमो-मुख्यः तस्मै ॥ ३० ॥

नम॑ऽआ॒शवे॑ चाजि॒राय॑ च॒ नम॒ः शीघ्र्या॑य च॒ शीभ्या॑य च॒ नम॒ऽऊर्म्या॑य चावस्व॒न्याय च॒ नमो॑ नादे॒याय॑ च॒ द्वीप्या॑य च ॥ ३१ ॥

आशवे अजिराय च द्वे अपि शीघ्रनामनी अश्नुतइतिआशुः अध्वनो व्यापकः, अजति गच्छतीत्यजिरः अजगतिक्षेपणयोः शीघ्र शीभौ क्षिप्रनामनी, शीभृकत्थने शीभते कत्थते इति शीभआत्मश्लाघी पचाद्यच्, एव तत्र भवइति छान्दसो यत्प्रत्ययः अधिष्ठातृदेवताव-चनमग्रेप्येवमेव बोद्धव्यं, ऊर्मिर्जलकल्लोलः अर्वाचीनं गच्छन् उद-कस्य स्वनो ध्वनिः आवस्वनः, नद्यां भवो नादेयः, स्त्रीभ्यो ढक्, द्वीपे भवो द्वीप्यः द्वीपो नद्यां मध्ये निरुदकप्रदेशः ॥ ३१ ॥

नमो॑ ज्येष्ठाय॑ च कनि॒ष्ठाय॑ च॒ नम॑ः पूर्व॒जाय॑ चापर॒जाय॑ च॒ नमो॑ मध्य॒माय॑ चापग॒ल्भाय॑ च॒ नमो॑ जघ॒न्याय च बु॒ध्न्याय च ॥ ३२ ॥

वयोऽवस्थाभिप्रायान्नमस्काराः पूर्वं जातः, पूर्वजः अपरे जातः

अपरजः, मध्ये भवो मध्यमः, अपगतो गल्भोऽव्युत्पन्नेन्द्रियो यस्य सो 'गल्भृ धार्ष्ट्ये, गल्भनं गल्भो धार्ष्ट्यम्' अपगल्भः एकगर्भांतरितो वा अव्यवहितः कनिष्ठः, जघनपश्चाद्भागः, बुध्नं वृक्षादिमूलभागः तत्र भवः ॥ ३२ ॥

नमः सोभ्याय च प्रतिसर्य्याय च नमो याम्याय च क्षेम्याय च नमः श्लोक्याय चावसान्याय च नमऽउर्व्वर्य्याय च खल्याय च ॥ ३३ ॥

सोभइति गन्धर्वनगरमुक्तं यद्वा उभाभ्यां पुण्यपापाभ्यां सहितः सोभो मनुष्यलोकः । पुण्येन पुण्यलोकं नयति पापेन पापमुभाभ्यां मनुष्यलोकमित्याथर्वणश्रुतेः, अभिचारकर्म वा विवाहाङ्गोचितं हस्त सूत्रं वा, आहुः प्रतिसरं हस्तसूत्रे माल्यस्य मण्डने इतिविश्वः, प्रतिसरः, यामः प्रहरः क्षेमं कुशलं, श्लोकशब्दः वैदिकमन्त्रा यशो वा, अवसाने प्राप्तिः, उर्वरायां सस्याढ्यां भवं उर्व्वर्य्यं सीता लांगलपद्धतिः तयोरन्तरं खलो धान्यखलः, खलः कल्के भुवि धने क्रूरे कर्णे जयेऽधमे इतिविश्वकोशात् ॥ ३३ ॥

नमो व्वन्याय च कक्ष्याय च नमः श्रवाय च प्रतिश्रवाय च नमऽआशुषेणाय चाशुरथाय च नमः शूराय चावभेदिने च ॥ ३४ ॥

वनं प्रस्रवणे गेहे प्रवाले ऽम्भसि कानने, वनं वृक्षसमूहः उदके च कक्षः, कक्षो वीरुधिदोर्मूले कच्छे शुष्कवने तृणे, नदीकक्षः पर्वतः कक्षो वा, अपः प्रतिश्रवः, प्रतिशब्दः आशुषेणः शीघ्रसेनः, आशुरथः शीघ्ररथः, शूरः शरभेदी अवभेदी अर्वाचीनं भेत्तुं शील-मस्येति अव भेदी ॥ ३४ ॥

नमो॑ बि॒ल्मिने॑ च कव॒चिने॑ च॒ नमो॑
व॒र्म्मिणे॑ च व॒रू॒थिने॑ च॒ नम॑÷ श्रु॒ताय॑ च
श्रु॒तसे॒नाय॑ च॒ नमो॑ दु॒न्दुभ्या॑य
४
चाहन॒न्याय च ॥ ३५ ॥
४

बिल्ममस्यास्तीति बिल्मी बिल्मं शिरस्त्राणं बिल्ममासनमुत्तरां गमुच्यते, कवचं पटस्यूतं कूर्पासगर्भं वर्मलोहकवचं, वरूथं हस्तिन उपरिगृहाकारः कोष्ठकस्तद्वते नमः श्रुताय सर्वलोकहिताय, श्रुतसेनाचमूर्यस्य तस्मै, दुंदुभौ भवः दुंदुभ्यः, आहनने भवः आह-नन्यः तस्मै ॥ ३५ ॥

नमो॑ धृ॒ष्णवे॑ च प्र॒मृ॒शाय॑ च॒ नमो॑ निष॒ङ्गिणे॑
चेषुधि॒मते॑ च॒ नम॑स्ती॒क्ष्णेष॑वे चायु॒धिने॑ च॒
नम॑÷ स्वायु॒धाय॑ च सु॒धन्व॑ने च ॥ ३६ ॥

धृष्णुः प्रगल्भः, सर्वं प्रमृशति प्रमृशः पंडितः, नमो निषंगिणे, इषुधिमते च, निषंगः खड्गः सोऽस्यास्तीति, इषवो धीयंते ऽत्रेति

इषुधिः तद्वते नमः, तीक्ष्णा इषवो यस्य स तीक्ष्णेषुः, आयुधमस्यास्ती त्यायुधी तस्मै नमः, स्वायुधाय शोभनायुधाय, सुधन्वने शोभनधनुषे नमः ॥ ३६ ॥

नमः स्रुत्याय च पथ्याय च नमः काट्याय च नीप्याय च नमः कुल्याय च सरस्याय च नमो नादेयाय च वैशन्ताय च ॥ ३७ ॥

नद्याएकदेशवाहिनी स्रुतिः तत्र भवः स्रुत्यः, पथि भवः पथ्यः, काटे भवः काट्यः कुत्सितं अटति काटः विषममार्गः, कूपः नीचै गच्छन्त्यापो यत्र स नीपः निम्नभूमिः, "ऋक्पूरब्धूः पथामिति" अप्रत्ययः, द्व्यन्तरुपसर्गेभ्योऽप ईदिति, अपशब्द स्येकारः, कुल्याख्या कृत्रिमा सरित्, कुलेषु देहेषु वान्तर्यामिरूपेण, कुलं देहेऽन्वये गणे, तत्र भवः कुल्यायां भवः कुल्यः, सरसि भवः सरस्यः, नद्यां भवो नादेयः, वेशंतोऽल्पसरः तत्र भवः वैशंतः ॥ ३७ ॥

नमः कूप्याय चावट्याय च नमो वीध्र्याय चातप्याय च नमो मेघ्याय च विद्युत्याय च नमो वर्ष्याय चावर्ष्याय च ॥ ३८ ॥

कूपइव: कूप्यः, अवटे गर्ते भवः, विशेषेण इनधति दीपयति वीध्रः, इंधी दीप्तौ तत्र भवो वीध्र्यः, आतपे भवः आतप्यः, मेघे भवो मेघ्यः, विद्युति भवः विद्युत्यः, वर्षे भवो वर्ष्यः, अवर्षे भवोऽवर्ष्यः ॥

नमो॒ वात्त्या॑य च॒ रेष्म्या॑य च॒ नमो॑ वास्त॒व्या॑य च वास्तुपा॑य च॒ नम॒: सोमा॑य च रु॒द्राय॑ च॒ नम॑स्ता॒म्राय॑ चा रु॒णाय॑ च ॥ ३९ ॥

वाते भवो वात्त्यः, रेष्मे भवो रेष्म्यः, रेषः हिंसायां, रिषति-हिंसायां अन्येभ्यो ऽपि दृश्यंतइति मनिन्, वास्तु गृहं तत्र भवो वास्तव्यः वास्तुं पातीति वास्तुपः, सोमाय च रुद्राय च नामतो नमस्कारः ताम्रवर्णाय वर्णतो नमस्कारः ॥ ३९ ॥

नम॑+शङ्ग॒वे॑ च पशु॒पत॑ये च॒ नम॑ऽउ॒ग्राय॑ च भी॒माय॑ च॒ नमो॑ऽग्रे व॒धाय॑ च दूरे व॒धाय॑ च॒ नमो॑ ह॒न्त्रे च॒ हनी॑यसे च॒ नमो॑ वृ॒क्षेभ्यो॒ हरि॑केशेभ्यो॒ नम॑स्ता॒राय॑ ॥ ४० ॥

गाः शं सुखं गमयति इति शंगुः, शुनां पतिः उद्गूर्णः उग्रः भीमो भीषणः, अग्रे स्थितो हंती त्यग्रे वधः, दूरे स्थितो हंतीति दूरे वधः, हंत्रे हननकर्त्रे, ( १ ) अतिशयेन हननकर्त्रे, हरितानि वर्णानि केशाइव येषां तेभ्यो वृक्षेभ्यो नमः, तारयति उत्तारयति संसारा दितिभावः ॥ ४० ॥

नम॑+शम्भ॒वाय॑ च मयो॒भवाय॑ च॒ नम॑+ शङ्क॒राय॑ च मयस्क॒राय॑ च॒ नम॑+ शि॒वाय॑ च शि॒वत॑राय च ॥ ४१ ॥

( १ ) अतिशयेन हन्ता हनीयान् तस्मै । प. ६ । ४ । १५४ । तुरिष्ठेमेयस्स्विति तृचो लोपः । प्रलये सर्वहन्तेत्यर्थः ॥

शं भवत्यस्मादिति शंभवः सुखभवः, शमउपशमे धातुः, यद्वा शं चासौ भवश्च शंभवः शं आनंदरूपः, भवः कालदेशानवच्छिन्नः भवनशक्तिः आनंदविज्ञानघनरूपः, मय इति सुखरूपः शंकरोति शंकरः, मयः करोतीति मयः करः, मयः सुखनाम, शिवाय शांताय निर्विकाराय शिवतराय निरतिशयसर्ववीजाय ॥ ४१ ॥

नमः॒ पार्य्याय चावार्य्याय च॒ नमः॒ प्प्रतरणाय चोत्तरणाय च॒ नमस्तीर्थ्याय च॒ कूल्याय च॒ नमः॒ शष्प्याय च॒ फेन्याय च ॥ ४२ ॥

पारे भवः पार्य्यः अवारे, पारा वारे परावाचो तीरे पात्रं यदन्तर मिति कोषः, भवः अवार्य्यः, प्रतरति येन प्रतरणं नौकादि लघुद्रव्यं किं च उत्तरति अनेनेत्युत्तरणं तीरइत्युच्यते, तीर्थे भवः तीर्थ्यः, कूले भवः कूल्यः, शष्प्ये शरत्वणे भवः शष्प्यः, फेने भवः फेन्यः तस्मै नमः ॥ ४२ ॥

नमः॒ सिकत्याय च प्प्रवाह्याय च॒ नमः॒ किंशिलाय च क्षयणाय च॒ नमः॒ कपर्दिने च पुलस्तये च॒ नमऽइरिण्याय च प्प्रपथ्याय च ॥ ४३ ॥

सिकतासु भवः सिकत्यः, प्रवाहे भवः प्रवाह्यः, किमेतदुदकार्द्रणं भूतश्शिलेति, यत्र वितर्कः स किं शिलः अथ वा किं शिला कर्करं

चेति, चियन्त्यस्मिन्नापइति च्चयण:, नम: कपर्द्दोऽस्यास्तीति कपर्द्दी पुरस्तिष्ठति शुभाशुभदिदृच्चया इति पुलस्तिः रलयोरैक्यत्वमत्र, थस्य तत्वं रस्य लत्वं छान्दसं, यद्वा पूर्षु शरीरेषु अस्तिः सत्ता यस्य स पुलस्तिः सर्वान्तर्यामी तस्मै, इरिण्याय च प्रपथ्याय च इरिणे-भव इरिण्यः इरिणोनिरुदकप्रदेशः, प्रपथे भवः प्रपथ्यः ॥ ४३ ॥

नमो व्रज्याय च गोष्ठ्याय च नमस्तल्प्याय च गेह्याय च नमो हृदय्याय च निवेष्प्याय च नमः काट्याय च गह्वरेष्ठाय च ॥ ४४ ॥

व्रजे गोसमूहे भवो व्रज्यः, गावस्तिष्ठन्त्यत्रेति गोष्ठः तत्र भवो गोष्ठ्यः, तल्पे भवः तल्प्यस्तल्पं शयनीयं, गेहे भवो गेह्यः, हृदये भवो हृदय्यः, निवेष्पे भवो निवेष्प्यः निवेष्पः आवर्तः नीहारजलं वा, काटे भवः काट्यः काटः कूपः, गह्वरे तिष्ठति गह्वरेष्ठः गह्वरमुदकादौ ॥ ४४ ॥

नमः शुष्क्याय च हरित्याय च नमः पांसव्याय च रजस्याय च नमो लोप्याय चोलप्याय च नमऽऊर्व्याय च सूर्व्याय च ॥४५॥

शुष्के भवः शुष्क्यः, हरिते भवः हरित्यः हरितमार्द्रम्, पांसुषु भवः पांसव्यः, रजसि भवः रजस्यः, लोपे भवः लोप्यः, उलपे भव उलप्यः उलपां बल्वजादितृणविशेषस्तत्र भवः उलप्यः तस्मै,

उलपस्तु गुल्मिनी तृण भेदयोः, ऊर्वो वाडवाग्निस्तत्रभवऊर्व्यः स इव शोभनः सूर्य्यः कल्पानलः तस्मै नमः ॥ ४५ ॥

नमः पर्णाय च पर्णशदाय च नमऽउद्गुरमाणाय चाभिघ्नते च नमऽआखिदते च प्रखिदते च नमऽइषुकृद्भ्यो धनुष्कृद्भ्यश्च वो नमो नमो वः किरिकेभ्यो देवानाꣳ हृदयेभ्यो नमो विचिन्वत्केभ्यो नमो विक्षिणत्केभ्यो नमऽआनिर्हतेभ्यः ॥ ४६ ॥

पर्णाय पर्णस्वरूपाय पर्णशदाय पर्णद्वति पतितपर्णावस्थानं वा, उद्गुरमाणः उद्यमशीलः, अभिघ्नतेऽभिहननं कुर्वते स्वाभक्तानामितिशेषः प्रखिदते प्रकर्षेण दीनभावं कुर्वते, ये इषवो बाणान् कुर्वन्ति ते इषुकृतः तेभ्यो नमः ये यूयं धनुष्कृतस्तेभ्यो नमः, वो युष्मदादेशयोगात्प्रत्यक्षा एते रुद्राः, तिस्रोऽशीतयो रुद्राः समाप्ताः, इदानीं रुद्राणां हृदयभूतानामग्निवायुसूर्य्याणां संबन्धीनि यजूंषि उच्यन्ते, वो युष्मभ्यं नमः वः केभ्यः, किरिकेभ्यः, एते हीदꣳ सर्वं कुर्वन्तीतिश्रुतेः, कुर्वन्तीदं जगद्वृष्ट्यादि द्वारेणेति किरिकाः वायुग्निसूर्य्याः किंभूतेभ्यः देवानां हृदयेभ्यः देवानां रुद्राणां अग्निवायुसूर्याणां हृदयभूताइत्यर्थः विचिन्वन्ति पृथक्कुर्वन्ति धर्मकारिणं पापकारिणं चेति, विचिन्वत्काः, आनिर्हतेभ्यः आगच्छद्भ्यः इन्तिर्गत्यर्थः, एते अग्निवायुसूर्याः सर्गादावेतेभ्यो लोकेभ्यः आभिमुख्येन निर्हता निर्गताइत्यर्थः ॥ ४६ ॥

द्रापे॒ऽअन्ध॑सस्पते॒ दरि॑द्र॒ नील॑लोहित ॥
आसांप्रजानामे॒षां प॑शूनाम्माभे॒र्मा रो॑
ङ्मोच॑ नः॒ किं च॒ नाम॑मत् ॥ ४७ ॥

सप्तकण्डिका एकरुद्रस्तुतयः हे द्रापे, द्राकुत्सा यां गतौ च द्रापयतीति द्रापिः अयथोक्तः पापकारिणां कुत्सितां गतिं नयतीत्यर्थः, हे अन्धसस्पते अन्धसः सोमस्य पते, हे दरिद्र निष्परिग्रह, हे नीललोहित नामान्येतानि रूपाणिचेति श्रुतौ एवं संबोध्य रुद्रमभयं याचते आसां प्रजानां एषां पशूनां अस्मदीयानां मा भेः मा भैषीः मा रोक् मा भांक्षोः 'रुजोभंगे' मोच नः किं च नाममत् उच्चसमवाये, नः अस्माकं किं च न अपत्यादि माऽऽममत् मा भीः मा रुग्णं कुरु, अमरोगी लुङि धातोरमागम आर्षः ॥ ४७ ॥

इ॒मा रु॒द्राय॑ त॒वसे॑ कप॒र्द्दिने॑ क्ष॒यद्वी॑राय॒
प्रभ॑रामहे म॒तीः॥ यथा॒ शमस॑द्द्वि॒पदे॒ चतु॑ष्पदे॒
विश्व॑म्पु॒ष्टङ्ग्रामे॑ऽ अ॒स्मिन्ननातु॒रम् ॥ ४८ ॥

वयं इमा मतीः बुद्धीः रुद्राय प्रभरामहे प्रेरयामः, "हृग्रहोर्भ श्छन्दसीति" सूत्रेण हकारस्य भकारः, याभिः स्तूयतइत्यर्थः तथा प्रेरयामः यथा येन प्रकारेण द्विपदे मनुष्ये चतुष्पदे पशौ शं कल्याणं असत् भवत् किंच विश्वं पुष्टं भवतु अस्मिन् ग्रामेऽनातुरं आपद्रहितत्वं भवतु भावप्रधानो निर्देशः ॥ ४८ ॥

या ते॑ रुद्र शि॒वा त॒नूः शि॒वा वि॒श्वाहा॑
भेष॒जी ॥ शि॒वा रु॒तस्य॑ भेष॒जी तया॑
नो मृड जी॒वसे॑ ॥ ४९ ॥

हे रुद्र या ते तव शिवा शान्ता तनूः शरीरं तया त्वं नः अस्मान् मृड सुखय जीवसे जीवनाय तनूः किंभूता शिवा, आदरार्थं पुनः पुनर्वचनं, विश्वाहा सर्वदा भेषजी भिषक्त्वेन सह वर्तते शिवा कल्याणा रुतस्य व्याधेर्भेषजो रुतशब्दो व्याधिवचन यद्वा शिवा रुतस्य फेत्कृतशब्दस्य भेषजी अपशब्दान् हन्ती इत्यर्थः ॥ ४९ ॥

परि णो रुद्रस्य हेतिर्वृणक्तु परि त्वेषस्य दुर्मतिरघायोः) ॥ अव स्थिरा मघवद्भ्यस्तनुष्व मीढ्वस्तोकाय तनयाय मृड ॥ ५० ॥

रुद्रस्य हेतिरायुधं नोऽस्मान्परिवृणक्तु परिवर्तयतु अघायोः पापशीलस्य दुर्मतीश्च नः परिसर्तुं एतु किंभूतस्य त्विषिदीप्ती, दीप्तस्य क्रुद्धस्येत्यर्थ', स्थिरा स्थिराणि धनूंषि मघवद्भ्यः मघवदर्थं अवतनुष्व अवतारय शिथिलीकुरु, मघं धनं हविर्लक्षणं येषां तेभ्यः यजमानेभ्य इत्यर्थ', किंच हे मीढ्वः सेक्तः, तोकाय पौत्राय, तनयाय पुत्राय, मृड सुखय, कर्मणि चतुर्थी ॥ ५० ॥

मीढुष्टम शिवतम शिवो नः सुमना भव परमे वृक्षऽआयुधन्निधाय कृत्तिं वसानऽआचर पिनाकं बिभ्रदागहि ॥ ५१॥

हेमीढुष्टम सेक्तृतम हे शिवतम नः अस्माकं शिवः सुमनाश्च शोभनमनाश्च भवतु किं च देशावस्थायिनं वृक्षे आयुधं निधाय स्थापयित्वा कृत्तिं वसानश्चर्म परिदधानः आचरागच्छेति शेषः पिनाकं बिभ्रत् आगहि आगच्छ ॥ ५१ ॥

हे विकिरिद्र विविधं वाताद्युपद्रवं द्रावयतीति विकिरिद्रः हे विलोहित विगतकलुषभाव हे भगवः भगवन् ते नमोऽस्तु यास्ते तव हस्ते सहस्रहेतयः आयुधानि संति अस्मत् अस्मत्तः अन्यं पुरुषं निवपन्तु निपतन्तु. "भगवद्इति मतुवसोरुः सम्बुद्धौ छन्दसीति" न कारस्य विसर्जनीयः ॥ ५२ ॥

सहस्राणि सहस्रशो बाह्वोस्तव हेतयः॥तासा-
मीशानो भगवः पराचीना मुखाकृधि ॥ ५३ ॥

हे रुद्र ते तव बाह्वोः याः सहस्रशः सहस्राणि हेतयः आयुधानि सन्ति ईशानस्त्वं तासां हेतीनां मुखानि पराचीना पराश्रितानि कृधि कुरु पराङ्मुखानि वा सहस्रस्यानन्तत्वप्रतिपादनाय शस्प्रत्ययः ॥ ५३ ॥

असङ्ख्याता सहस्राणि ये रुद्राअधिऽभूम्याम्॥
तेषाᳬ सहस्रयोजनेऽवधन्वानि तन्मसि ॥५४॥

हेरुद्र असंख्याता असंख्यातानि सहस्राणि भूम्यां उपरि तेषां सहस्रयोजने अवस्थितानां धन्वानि धनूंषि अवतन्मसि अवतन्मः अव तारयामः ॥ ५४ ॥

अस्मिन्महत्यर्णवेऽन्तरिक्षे भवाऽअधि ॥
तेषाᳬ सहस्रयोजनेऽवधन्वानि तन्मसि ॥५५॥

अस्मिन्नन्तरिक्षे भवा रुद्रा अधि उपरि स्थिताः तेषामिति

व्याख्यातं, अन्तरिक्षे किं भूते अर्णवे अर्णः पानीयं तद्युक्ते मत्वर्थीयो वकारः, महति व्यापके ॥ ५५ ॥

नीलग्रीवाः शितिकण्ठा दिवꣳ रुद्रा ऽउप श्रिताः ॥ तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि ॥ ५६ ॥

ये नीलग्रीवाः कृष्णकण्ठाः श्वेतकण्ठाश्च रुद्रा दिवं द्युलोकं उपश्रिताः उपरि स्थिताः तेषामित्यादि पूर्ववत् ॥ ५६ ॥

नीलग्रीवाः शितिकण्ठाः शर्वा ऽअधः क्षमाचराः ॥ तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि ॥ ५७ ॥

ये शर्वाः रुद्रा नीलग्रीवाः शितिकण्ठा अधः क्षमाचराः पृथिव्या अधः संचरन्ति तेषा मित्यादि ॥ ५७ ॥

ये वृक्षेषु शष्पिञ्जरा नीलग्रीवा विलोहिताः ॥ तेषाꣳ सहस्र-योजनेऽव धन्वानि तन्मसि ॥ ५८ ॥

ये रुद्राः वनेषु वृक्षेष्वासते किंभूताः शष्पिञ्जरा शष्पाइव पिञ्जरवर्णा शष्पं नवतृणं नीलग्रीवाः विलोहिता विगतकलुषभावाः विविधं लोहितर वा लोहितशब्देन धातव उच्यन्ते तेन त्वक्लोहितमज्जादियुक्ता इत्यर्थः तेषामित्यादि ॥ ५८ ॥

ये भूतानामधिपतयो विशिखासः कपर्दिनः ॥ तेषाᳯ सहस्रयोजने ऽवधन्वा नितन्मसि ॥ ५९ ॥

ये भूतानां प्राणिनां अधिपतयः ईश्वराः विशिखासः सर्वमुंडाः कपर्दिनो जटिलाः तेषां धन्वानि धनूंषि अवतन्मसि अवतनुमः नमयामः ॥ ५९ ॥

ये पथाम्पथिरक्षय ऐलबृदा आयुर्युधः ॥ तेषाᳯ सहस्रयोजनेऽवधन्वानि तन्मसि ॥ ६० ॥

ये रुद्राः पथां अधिपतयः मार्गाणामीश्वराः ये च पथिरक्षयः पथां पालका इलानामन्नानां समूहा ऐलं ये विभ्रन्ति ते ऐलबृदाः आयुर्युधः आयुरेव जीवनं पाणौ कृत्य युध्यन्ति चौरादयः तेषामित्यादि ॥ ६० ॥

ये तीर्थानि प्रचरन्ति सृकाहस्ता निषङ्गिणः ॥ तेषाᳯ सहस्रयोजनेऽव धन्वानि तन्मसि॥६१॥

ये रुद्रास्तीर्थानि प्रयागप्रभृतीनि प्रचरन्ति गच्छन्ति सृकावन्तः आयुधहस्ताः, सृकाइत्यायुधनाम, निषङ्गिणः खड्गिनः तेषामित्यादि ॥ ६१ ॥

ये ऽन्नेषु विविध्यन्ति पात्रेषु पिबतो जनान् ॥ तेषाᳯ सहस्रयोजनेऽव धन्वानि तन्मसि॥६२॥

ये अन्नेष्ववस्थिताः विविध्यन्ति ताडयन्ति अयमर्थः येषामेवा धिकारः अन्नस्य भक्षयिता रोगादिभिर्गृहीतव्यादृति ते च पात्रे- ष्ववस्थिताः संतः पितरः जनान् विविध्यन्ति तेषामित्यादि ॥ ६२ ॥

य॒ऽए॒ताव॑न्तश्च॒ भूया॑ᳪसश्च॒ दिशो॑ रु॒द्रा

वि॑तस्थि॒रे ॥ तेषा॑ᳪ सहस्रयोज॒नेऽव॒

धन्वा॑नि तन्मसि ॥ ६३ ॥

ये एतावन्तः रुद्राः ये भूयांसि अथान्यदुक्तेभ्योऽपि बहुतराः दिशः वितस्थिरे विष्टभ्य स्थिताः तेषामित्यादि इत उत्तरं त्रिलोक- स्थिता रुद्राः स्तूयन्ते ॥ ६३ ॥

नमो॑ऽस्तु रु॒द्रेभ्यो॒ ये दि॒वि येषां॑ व॒र्षमिष॑वः ॥

तेभ्यो॒ दश॒ प्राचो॒र्दश॑ दक्षि॒णा दश॑ प्र॒तीचो॒र्दश-

ओदी॑चो॒र्दशो॒र्ध्वाः ॥ तेभ्यो॒ नमो॑ऽअस्तु ते

नो॑ऽवन्तु ते नो॑ मृडयन्तु ते यं॒ द्विष्मो॒ यश्च॑

नो॒ द्वेष्टि॒ तमे॑षां॒ जम्भे॑ दध्मः ॥ ६४ ॥

तेभ्यो रुद्रेभ्यो नमोस्तु केभ्यः ये दिवि द्युलोके स्थितास्तेषां रुद्राणां वर्षं वृष्टिः इषवः आयुधस्थानीयः तेभ्यो रुद्रेभ्यो दशाङ्गुलीः प्राचीः करोमि नमस्कारार्थमिति यावत् एवं दशाङ्गुलीः दक्षिणा दश प्रतीचीः दश उदीचीः दश ऊर्ध्वाः करोमीति सर्वत्र तेभ्यो नमोस्तु ते नः अवन्तु अस्मान् मृडयन्तु सुखयंतु ते च वयं सन्तर्पि-

तद्रुद्राः सन्तः यं पुरुषन्द्विषः यश्च नः अस्मान् द्वेष्टि एतेषां रुद्राणां जंभे मुखे दध्मः धारयामः ॥ ॥ ६४ ॥

नमो ऽस्तु रुद्रेभ्यो येऽन्तरिक्षे येषाँ वातऽइ-
षवः ॥ तेभ्यो दश प्राचीर्दश दक्षिणा दश
प्रतीचीर्दशोदीचीर्दशोर्ध्वाः ॥ तेभ्यो नमो-
ऽअस्तु ते नोऽवन्तु ते नो मृडयन्तु ते यन्द्विष्मो
यश्च नो द्वेष्टि तमेषाञ्जम्भे दध्मः ॥ ६५ ॥

नमो अस्तु येऽन्तरिक्षे येषां वात इषवः तेभ्यो दश इति पूर्ववत् ॥ ६५ ॥

नमोऽस्तु रुद्रेभ्यो ये पृथिव्याँ येषामन्न-
मिषवः ॥ तेभ्यो दश प्राचीर्दश दक्षिणा
दश प्रतीचीर्दशोदीचीर्दशोर्ध्वाः ॥ तेभ्यो
नमोऽअस्तु ते नोऽवन्तु ते नो मृडयन्तु ते यन्द्वि-
ष्मो यश्च नो द्वेष्टि तमेषाञ्जम्भे दध्मः ॥ ६६ ॥

नमोऽस्तु रुद्रेभ्यो येषामन्नमिषवः 'तेभ्यो दश इतिद्वयोः कण्डिकयोः उक्तार्थः ॥ ६६ ॥

वयᳬ सोम व्रतेतव मनस्तनूषु बिभ्रतः ॥
प्रजावन्तः सचेमहि ॥ १ ॥

इतिशतरुद्रजपे पञ्चमोऽध्याय: ५

अथ नीलसूक्तस्य पुन: षोडशर्चो व्याख्यात: ।

हे सोम तव व्रते यज्ञे वर्त्तमाना वयं तनुषु शरीरेषु जाग्रत्स्वप्नसुषुप्त्यादिषु मन: विभ्रत: धारयन्त: सचेमहि सेवमहि सेवितव्यानि वस्तूनीति शेष: ॥ १ ॥

एष ते रुद्रभाग: सह स्वस्राम्बिकया तञ्जुषस्व स्वाहैष ते रुद्र भागऽआखुस्ते पशु: ॥ २ ॥

त्रैयंबका: पुरोडाशा: तवावदानहोम: हे रुद्र एष ते तव भाग: अंश: स्वस्रा भगिन्या अम्बिकया सहितं मां भागं जुषस्व सेवस्व स्वाहा तत्सुहुतमस्तु अत: परमाखूत्करं परिकिरति हे रुद्र ते तव आखु: मूषक: पशुर्भाग: ॥ २ ॥

अवरुद्रमदीमह्यव देवन्त्र्यम्बकम् ॥ यथा नो वस्यसस्करद्यथा न: श्रेयसस्करद्यथा नो व्यवसाययात् ॥ ३ ॥

अवहृत्य पृथक्कृत्य अन्याभ्यो देवताभ्यइति शेष: रुद्रं अदीमहि अद्याम भोजयाम:, अदभक्षणे छन्दसि णिलोप:, तथाऽवगत्य ज्ञात्वा यथा नोऽस्मान् वस्यस: वस्तृतरान् कुर्यात् वसनशीलान् कुर्यादित्यर्थ:, "छन्दसि तृन् वस्तीति" वसनिवासे इत्यस्य तृटि तुट् वस्तेति भवति, तुम्छन्दसोति ईयसुनि कृते "तुरिष्ठेमेय: स्विति" तृनो लोप: वसीयसइति प्राप्ते इलोपश्छान्दसो भवति तथा च न:

अस्मान् श्रेयसो यशस्वतरान्कुर्यात् यथा च नः अस्मान् व्यवसाययात् विशेषेण कर्मान्तरं नयेत् षोतकर्मणोन्त्यस्य विपूर्वस्यावपूर्वस्य च विधिलिङ् आर्द्धधातुको धातुरयम् ॥ ३ ॥

भे॒षज॑मसि भेष॒जङ्गवेऽश्वा॑य॒ पुरु॑षाय

भेष॒जम् ॥ सुख म्मे॒षाय॑ मे॒ष्यै ॥ ४ ॥

हे रुद्र यस्त्वं स्वभावतएव भेषजं औषधमसि सर्वप्राणिनां हितकारी भवसि अतः सँप्रार्थ्यमसि गवेऽश्वाय पुरुषाय भेषजं देहीति शेषः मेषाय मेष्यै सुखं देहि ॥ ४ ॥

त्र्य॑म्बकं य्य॒जामहे सुग॒न्धिम्पु॑ष्टि॒वर्द्ध॑नम् ॥

उ॒र्व्वा॒रु॒कमि॑व॒ बन्ध॑नान्मृ॒त्योर्मु॑क्षीय॒

माऽमृता॑त् ॥ ५ ॥

वयं त्र्यम्बकं शिवं यजामहे पूजयामः सुगन्धिं मर्त्यदोषरहितं पुष्टिवर्द्धनं पुष्टेर्धनधान्यादेर्वर्द्धयितारं अतः सोऽस्मान् मृत्योः सकाशात् मुक्षीय मोचयतु पुरुषव्यत्ययश्छान्दसः कस्मात्कमिव बन्धनात् उर्वारुकमिव उर्वारुः कर्कटीविशेषः अनायासे दृष्टान्तं माऽमृतात् अमृतान्मा मोचयतु कुमार्यो रूपवन्तं पतिं प्रार्थयंति ॥५॥

त्र्य॑म्बकँ य्य॒जामहे सुग॒न्धिम्प॑ति॒वेद॑नम् ॥

उ॒र्व्वा॒रु॒कमि॑व॒ बन्ध॑नादि॒तो मु॑क्षीय॒

माऽमुत॑ः ॥ ६ ॥

त्र्यम्बकं शिवं यजामहे पूजयामः किंभूतं सुगन्धिं प्रीतं, वेदं पतिं ददाति पतिवेदं भर्तृलम्भयितारमित्यर्थः, वित्तलाभे किं प्रार्थयती इतः ज्ञातिवर्गात् त्र्यम्बकः सुचीय मोचयतु बन्धनात् उर्वारुकमिव अमुतः पतिस्थानान्मा मोचयतु ॥ ६ ॥

एतत्ते रुद्रावसन्तेन परो मूजवतोऽतीहि ॥
अवततधन्वा पिनाकावसः कृत्तिवासा
ऽअहिंसन्नः शिवोऽतीहि ॥ ७ ॥

रुद्रं यजति हे रुद्र एतत् ते तव अवसं हविःशेषाख्यं भोज्यं भक्ष्यं यन्ति तेन संबलेन परः परस्तात् मूजवतः पर्वतात् त्वं अतीहि अतिक्रम्य गच्छ मूजवांनामपर्वते रुद्रः वसति कथंभूतो गच्छ अवततधन्वा अवततं विस्तृतं धनुर्यस्य सोऽवततधन्वा अवरोपितधनुष्कः, पिनाकावसः पिनाके कृतः अवसो आच्छादनं यस्य पिनाको रुद्रांशुकेन कृतसंवरणइत्यर्थः अहिंसन् नः अस्मान् अनाशयन् शिवः भूत्वा अतीहि हे शिव पूजितः सन्नागच्छ पुनरुक्तिस्त्वादरार्था ॥ ७ ॥

त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषम् ॥
यद्देवेषु त्र्यायुषं तन्नोऽअस्तु त्र्यायुषम् ॥८॥

त्रीणि आयूंषि समाहृतानि त्र्यायुषं बाल्ययौवनजराणि तथा च यत् जमदग्नेः कश्यपस्य च यद्देवेषु त्र्यायुषं तन्नः अस्माकं त्र्यायुषं अस्त्वीत्याशीः प्रार्थनम् ॥ ८ ॥

शिवो नामासि स्वधितिस्ते पिता नमस्तेऽअस्तु मा मा हिᳯं॰सीः ॥ निवर्त्तयाम्म्यायुषेऽन्नाद्याय प्रजननाय रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय ॥ ९ ॥

हे क्षुर यः त्वं शिवो नामासि ते स्वधितिर्वज्रः पिता तस्मै ते नमोस्तु हे भगवन् मां मा हिंसीः मा नाशय त्वया निवर्त्तयामि मुण्डयामि, निपूर्वो वृत्तिर्मुण्डने वर्तते, किमर्थं आयुषे अन्नाद्याय अन्नाय उद्भिन्नाय च यद्वा अन्नं च तदाद्यं चेति अन्नाद्यं तस्मै, प्रजननाय च प्रकृष्टजननाय रायस्पोषाय रायो धनं तस्य पुष्टयै सुप्रजास्त्वाय शोभनापत्यतायै सुवीर्याय शोभनवीर्याय, एष ते हे व्याख्याते नमस्ते हे अध्याये व्याख्याते ॥ ९ ॥

न तं विदाथ यऽइमा जजानान्यद्युष्माकमन्तरं बभूव ॥ नीहारेण प्रावृता जल्प्या चासुतृपऽउक्थशासश्चरन्ति ॥ १० ॥

इदानीं विश्वकर्मा मनुष्याणामुपदेशं करोति तं पुरुषं यूयं न विदाथ न जानीथ तं कं यद्दमा इमानि भूतानि जजान जनयति यतः उपदृष्टमेनं भवति अतः कारणात् अस्माकं तस्य पुरुषस्य च अन्यत् महदन्तरं न बभूव पुरुषो जनको यूयं जन्या पुरुषो ग्राम को यूयं ग्राम्याइति यदि ज्ञात्वा सत्येनोपास्यते तदा न संसारः

त्र्यम्बकं शिवं यजामहे पूजयामः किंभूतं सुगन्धिं प्रीतं, वेदं पतिं ददाति पतिवेदं भर्तृलम्भयितारमित्यर्थः, वित्तलाभे किं प्रार्थयते इतः ज्ञातिवर्गात् त्र्यम्बकः मुक्षीय मोचयतु बन्धनात् उर्वारुकमिव अमुतः पतिस्थानान्मा मोचयतु ॥ ६ ॥

एतत्ते रुद्रावसन्तेन परो मूजवतोऽतीहि ॥
अवततधन्वा पिनाकावसः कृत्तिवासा
ऽअहिंसन्नः शिवोऽतीहि ॥ ७ ॥

रुद्रं यजति हे रुद्र एतत् ते तव अवसं हविःशेषाख्यं भोज्यं भक्षं यन्ति तेन संबलेन परः परस्तात् मूजवतः पर्वतात् त्वं अतीहि अतिक्रम्य गच्छ मूजवांनामपर्वते रुद्रः वसति कथंभूतो गच्छ अवततधन्वा अवततं विस्तृतं धनुर्यस्य सोऽवततधन्वा अवरोपितधनुष्कः, पिनाकावसः पिनाकैः वृतः अवसो आच्छादनं यस्य पिनाको रुद्रांशुकेन कृतसंवरणइत्यर्थः अहिंसन् नः अस्मान् अनाशयन् शिवः भूत्वा अतीहि हे शिव पूजितः सन्नागच्छ पुनरुक्तिस्त्वादरार्था ॥ ७ ॥

त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषम् ॥
यद्देवेषु त्र्यायुषं तन्नोऽअस्तु त्र्यायुषम् ॥ ८ ॥

त्रीणि आयूंषि समाहृतानि त्र्यायुषं बाल्ययौवनजराणि तथा च यत् जमदग्नेः कश्यपस्य च यद्देवेषु त्र्यायुषं तन्नः अस्माकं त्र्यायुषं अस्त्वीत्याशीः प्रार्थनम् ॥ ८ ॥

शिवो नामासि स्वधितिस्ते पिता नमस्तेऽ अस्तु मा मा हिंᳪसीः ॥ निवर्त्तयाम्यायुषेऽन्नाद्याय प्रजननाय रायस्पोषाय सुप्रजास्त्वाय सुवीर्य्याय ॥ ९ ॥

हे क्षुर यः त्वं शिवो नामासि ते स्वधितिर्वज्रः पिता तस्मै ते नमोऽस्तु हे भगवन् मां मा हिंसीः मा नाशय त्वया निवर्त्तयामि मुण्डयामि, निपूर्वो वृत्तिर्मुण्डने वर्तते, किमर्थं आयुषे अन्नाद्याय अन्नाय उद्भिन्नाय च यद्वा अन्नं च तदाद्यं चेति अन्नाद्यं तस्मै, प्रजननाय च प्रकृष्टजननाय रायस्पोषाय रायो धनं तस्य पुष्टयै सुप्रजास्त्वाय शोभनापत्यतायै सुवीर्याय शोभनवीर्याय, एष ते द्वे व्याख्याते नमस्ते द्वे अध्याये व्याख्याते ॥ ९ ॥

न तँ विदाथ यऽइमा जजानान्यद्युष्माकमन्तरं बभूव ॥ नीहारेण प्रावृता जल्प्या चासुतृपऽउक्थशासश्चरन्ति ॥ १० ॥

इदानीं विश्वकर्मा मनुष्याणामुपदेशं करोति तं पुरुषं यूयं न विदाथ न जानीथ तं कं यइमा इमानि भूतानि जजान जनयति यतः उपदृष्टमेनं भवति अतः कारणात् अस्माकं तस्य पुरुषस्य च अन्यत् महदन्तरं न बभूव पुरुषो जनको यूयं जन्या पुरुषो ग्रामको यूयं ग्राम्याइति यदि ज्ञात्वा सत्येनोपास्यते तदा न संसारः

स्यात् तथा च यो भेदः संसारित्वमाचक्षतइत्यर्थः, सर्वं प्रत्यक्षमुक्त्वाऽथेदानीं परोक्षमभिनयेन दर्शयन्नाह नीहारेणेत्यादि ये चेति नीहारेण आ अविद्यया चावृत्ताः अवगुण्ठिताः ते जल्प्या जल्पप्रवृत्ता हेतुपक्षदृष्टान्तैः आत्मज्ञानप्रजल्पकाः तार्किकाइति यावत् ये च असुतृपः असून् प्राणान् तर्पयन्ती तेऽसुतृपः देहालङ्करिष्णवः तेषां यदेवान्तरं बभूव तदेव भवतामित्यर्थः ये च उक्थानि यज्ञे यज्वानः शंसन्ति ते उक्थशासः तेऽपि पुरुषं प्रति चरन्ति विचलन्ति तेन जानन्तीत्यथो ये तु पुरुषविदः ते पुरुषमेव जयन्ति तथा च पुरुषएव ज्ञातव्यः तेन संस्रतिना न मोक्षो भवतीति वाक्यार्थः ॥१०॥

विश्वकर्मा ह्यजनिष्ट देवऽआदिद्गन्धर्वो-
ऽअभवद्द्वितीयः ॥ तृतीयः पिता जनितौ
षधीनामपाङ्गर्भं व्यदधात्पुरुत्रा ॥ ११ ॥
४

विश्वकर्मा आदित्यान्तरपुरुषः अजनिष्ट जातः किं भूतो देवः दान.दिगुणयुक्तः 'आत् इत् निपातौ आनन्तर्ये' अथानन्तरं गन्धर्वो द्वितीयो ऽभवत् गावो वा धारयति गन्धर्वः गां पृथ्वीं धारयति वा गन्धर्वशब्दोऽग्निवाचकश्चाग्न्यौषधीनां जनिता पालयिता पर्जन्यः तृतीयोऽभवत् स उत्पन्नः सन्नपां गर्भं व्यदधात् विधारयति स्म गर्भं किं भूतं पुरुत्रातारं यद्वा अपां गर्भं विधारयति गर्भं किं भूतं पुरुत्रा बहुप्रकारेन ग्रादिरूपेणेत्यर्थः, मोठुष्टमेति चत्वारि व्याख्यातानि ॥ ११ ॥

अथ शान्तिमन्त्राः। तत्र कात्यायनसूत्रम्। शान्तिकरणमाद्यन्तयोः। ऋचं वाचमित्यध्यायेन शान्तिकरणम् कार्यं स्वाध्याये मन्त्रपाठे प्रवर्ग्यमन्त्रादावस्वाध्यायस्य दर्शनात्॥

ऋचं॑ व्वाचं॒ प्रप॑द्ये॒ मनो॒ यजुः॒ प्रप॑द्ये॒ साम॑ प्प्राणं प्रप॑द्ये॒ चक्षुः॒ श्रोत्रं॒ प्रप॑द्ये॥ व्वागोजः॑ स॒हौजो॒ मयि॑ प्प्राणापा॒नौ॥ १॥

ऋचमृग्रूपां वाचमहं प्रविशामि शरणं व्रजामि। यजुः यजरूपं मनः प्रविशामि प्राणं प्राणरूपं साम प्रपद्ये चक्षुरिन्द्रियं च श्रोत्रेन्द्रियं च प्रपद्ये वागादिग्रहणं सप्तदशावयवोपलक्षणं सप्तदशावयवं प्रजापतेर्लिङ्गं प्रपद्ये इत्यर्थः, त्रयीविद्यां लिङ्गशरीरं च प्रपन्नं प्रवर्ग्यो न नाशयेदिति भावः, तथा वागिन्द्रियमोजो मानसं बलं धार्ष्ट्यम्। पुनरोजो ग्रहणाच्छरीरं च बलम् प्राणापानौ उच्छ्वासनिश्वासवायू च एते सह एकीभूताः सन्तो मयि वर्तन्ते अतो मदिष्टकर्मणि शान्तिर्भवतीत्यभिप्रायः॥ १॥

यन्न्मे॑ च्छिद्रं॑ चक्षु॑षो॒ हृद॑यस्य॒ मन॑सो॒ वाऽति॑तृण्णं॒ बृह॒स्प्पति॑र्म्मे॒ तद्द॑धातु॥ शन्नो॑ भवतु॒ भुव॑नस्य॒ यस्प्पतिः॑॥ २॥

मे मम चक्षुषः चक्षुरिन्द्रियस्य यत् छिद्रमवखण्डनं जातमपकर्माचरणेन हृदयस्य बुद्धेर्वा यत् छिद्रं जातं मनसा वा यत् अतितृण्णमतिहिंसितं यच्चक्षुर्बुद्धिमनसां व्याकुलत्वं जातं बृहस्पतिर्देवगुरुः मे मम तत् छिद्रमतितृण्णं च दधातु सन्दधातु छिद्रं

निवर्त्तयतु भुवनस्य भूतजातस्य यः पतिरधिपतिः सर्वेष्टफलदाता-को यज्ञः स नोऽस्माकं शं सुखरूपो भवतु, शमिति सुखनाम ॥२॥

ततो व्याहृतिसहिता तत्सवितुरिति गायत्री सन्ध्याप्रकरणे व्याख्याता ॥ ३ ॥

कया न इति मन्त्रो नवग्रहपूजनप्रकरणे व्याख्यास्यते ॥ ४ ॥

कस्त्वा॑ स॒त्यो मदा॑नां॒ मंहि॑ष्ठो मत्स॒-
दन्ध॑सः । दृ॒ढा चि॑दा॒रुजे॒ वसु॑ ॥ ५ ॥

हे इन्द्र अन्धसोऽन्नस्य सोमरूपस्य कः अंशः त्वा त्वां मत्सत् माद्यति मत्तं करोति, मदीहर्षे 'लेटोऽडाटाविति' आडागमः 'सिब्बहुलं लेटीति' सिप्प्रत्ययः तिपइलोपः, कीदृशः मदानां मंहिष्ठः मदयन्ति तानि मदानि पचाद्यच् मदजनकानि हवींषि तेषां मध्ये मंहिष्ठः श्रेष्ठः अत्यन्तमदजनकः, महि कान्तौ चुरादिः, मंहयति द्योतते मंही मंहिष्ठः, यद्वा महि वृद्धौ भ्वादिः मंहते वर्द्धते मंही अत्यन्तं मंही मंहिष्ठः येनांशेन मत्तः सन्दृढाचित् दृढान्यपि वसु वसूनि धनानि कनकानीति त्वमारुजे रुजोभङ्गे, पुरुषव्यत्ययः आरुजसि चूर्णयसि दातुं मनसि भङ्क्त्वा ददासीत्यर्थः ॥ ५ ॥

अ॒भी षु णः॒ सखी॑नामवि॒ता ज॑रितॄ॒णाम् ॥
श॒तं भ॑वास्यू॒तये॑ ॥ ६ ॥

हे इन्द्र त्वमूतिभिः, अवनैर्हेतुभिः, त्वमूतयेऽवनाय पालनाय इति वा पाठः, सुष्ठु सम्यक् अभि आभिमुख्येन शतं भवासि भवसि आडागमः, शतशब्दो बहुवाची बहुरूपो भवसि पालनाय नाना रूपाणि दधासि इत्यर्थः । कीदृशस्त्वं सखीनां मित्राणां ज-

रितॄणां स्तोतॄणां नोऽस्माकमृत्विजामविता पालयिता' संहिताया मभीत्यस्य दीर्घः। "सुञ्इति" सुशब्दस्य षत्वम् "नश्च धातुस्थोरुषु भ्य" इति षुशब्दात्परस्य नकारस्य णत्वम् ॥ ६ ॥

कया त्वन्न ऽऊत्त्याऽभिप्रमन्दसे वृषन् ॥
कया स्तोतृभ्य ऽआभर ॥ ७ ॥

हे वृषन् वर्षतीति वृषा हे सेक्तः इन्द्र 'वासवो वृत्रहा वृषेत्यभिधानम्' कया ऊत्या केन तर्पणेन हविर्दानेन नोऽस्मानभिप्रमन्दसे अभिमोदयसि, "मदिस्तु स्वपने जाड्ये मदे मोदे स्तुतौ गतौ, लट्, कया च ऊत्या तृप्त्या स्तोतृभ्यः स्तुतिकर्तृभ्यो यजमाने आभर आहर आहरसि धनं दातुमिति शेषः तद्वयेन तथा वयं कुर्म इति भाव, आभरेति लडर्थे लोट् ॥ ७ ।

इन्द्रा व्विश्वस्य राजति ॥ शन्नो ऽअस्तु
द्विपदे शञ्चतुष्पदे ॥ ८ ॥

विश्वस्य सर्वस्य जगतः इन्द्रः इदि परमैश्वर्ये इन्दतीतीन्द्रः परमेश्वरः आदित्यो वा यो राजति देदीप्यते ईष्टे वा स नोऽस्माकं द्विपदे विभक्तिव्यत्ययः, द्विपदां पुत्रादीनां शं सुखरूपोऽस्तु चतुष्पदे चतुष्पदां गवादीनां च शं सुखरूपोऽस्तु ॥ ८ ॥

शन्नो मित्रः शं व्वरुणः शंनो भवत्त्वर्य्यमा ॥
शन्नऽइन्द्रो बृहस्पतिः शन्नो व्विष्णुरुरुक्रमः ९

मित्रो देवो नोऽस्माकं शं सुखरूपो भवतु महावीरप्रसादात् मेद्यति भक्तेषु स्निह्यतीति मित्रः । वरुणः शं सुखरूपो भवतु ह

योऽत्यङ्गीकरोति भक्तमिति वरुणः अर्यमा नोऽस्माकं शं भवतु इ यर्ति गच्छति भक्तं प्रतीत्यर्यमा इन्द्रो देवेशो नोऽस्माकं शं भवतु बृहस्पतिर्देवगुरुर्नः शं भवतु बृहतां वेदानां पतिः पालकः उरुर्विस्तीर्णः क्रमः पदन्यासो यस्य स विष्णुः नोऽस्माकं शं भवतु वेवेष्टि व्याप्नोतीति विष्णुः । ९ ।

शन्नो॒ वातः॑ पवता॒ᳪ शन्न॑स्तपतु॒ सूर्य्यः॑ ॥

शन्नः॒ कनि॑क्रदद्दे॒वः प॒र्ज्जन्यो॑ अ॒भि व॑र्षतु १०

वातो वायुर्नोऽस्माकं शं सुखकारी अपरुषः अव्याधिजनकश्च पवताम् वहताम् 'पवगतौ लोट्, सुवति जनान् स्वस्वव्यापारेषु प्रेरयति सूर्यः शं सुखरूपोऽदहनो भेषजरूपश्च नोऽस्माकं तपतु किरणाः प्रसारयन्तु पर्जन्यः पिपर्ति पूरयति जनमिति पर्जन्यः, पुरोऽभः पुरोजन्यतेऽनेन वा 'पर्जन्यौ रसशब्देन्द्रावित्यभिधानम्' पर्जन्येशो देवो नोऽस्माकं शं सुखकरं काशनिष्वाररहितं यथा तथा अभिवर्षतु सिञ्चतु कीदृशः कनिक्रदत् अत्यन्तं क्रन्दतीति शब्दं कुर्वन् "दाधर्ति दर्धतीत्यादिना" यङ्लुगन्तो निपातः ॥ १० ॥

अहा॑नि॒ शम्भ॑वन्तु नः॒ शᳪ रात्रीः॒ प्रति॑-
धीयताम् ॥ शन्न॑ऽइन्द्रा॒ग्नी भ॑वता॒मवो॑भिः॒
शन्न॑ऽइन्द्रा॒वरु॑णा रा॒तह॑व्या ॥ शन्न॑ऽइन्द्रापूषणा॒
व्वाज॑साता॒ शमिन्द्रा॒सोमा॑ सुवि॒ताय॒ शंय्योः॑ ११

अहानि दिनानि नोऽस्माकं शं सुखरूपाणि रात्रीः सुखरूपा

भवन्तु अस्मासु प्रतिधीयतां प्रतिदधातु महावीरइतिशेषः कर्त्तरि यक्छान्दसः इन्द्राग्नी इन्द्रावरुणौ इन्द्रापूषणौ इन्द्रासोमौ देवता इन्द्राग्नी अवोभिः पालनैः कृत्वा नोऽस्माकं शं सुखरूपौ भवताम् रातं दत्तं हव्यं ययोस्तौ रातहव्यौ हविस्तृप्तौ इन्द्रावरुणौ नः शं भवताम्, वाजसातौ वाजस्यान्नस्य सातौ दानेनिमित्त भूते किमर्थं सुविता सुष्ठु इतं सुवितम् साधुगमनाय साधुप्रसवाय वा तथा शं रोगाणां शमनाय योः यवनाय पृथक्करणाय च भयानाम् रोगं भयञ्च निवर्त्य सुखरूपौ भवताम्, "देवता द्वंद्वेचेति," सर्वत्र पूर्वपदस्य दीर्घः ॥ ११ ॥

शन्नो देवीरित्यस्य व्याख्यानं आद्यप्रकरणे कृतम् ॥ १२ ॥

स्योना पृथिवि नो भवा नृक्षरा निवेशनी
यच्छा नः शर्म्म सप्रथाः ॥ १३ ॥

एतन्मन्त्रं ग्रहार्चने व्याख्यास्यते ॥ १३ ॥

आपोहिष्ठेत्यादितृचं सन्ध्याप्रकरणे व्याख्यातम् ॥ १४ । १५ ॥
॥ १६ ॥ द्यौः शान्तिरित्यग्रे व्याख्यास्यते ॥ १७ ॥

दृते दृꣳहमा मित्रस्य मा चक्षुषा सर्व्वाणि
भूतानि समीक्षन्ताम् ॥ मित्रस्याहं चक्षुषा
सर्व्वाणि भूतानि समीक्षे ॥ मित्रस्य
चक्षुषा समीक्षामहे ॥ १८ ॥

दृते दृविदारणे विदीर्णे जराजर्जरितेऽपि शरीरे हे महावीर मा मां त्वं दृंह दृढी कुरु यद्वा दृते विदीर्णे कर्मणि मां दृंह अ-

।च्छद्रं कर्म कुरु यद्वा सुसुषिरत्वात्सेतृत्वच्च इतिशब्देन महावीरःहे इते महावीर मां इन्द्र दृढीकुरु। कथं दार्ढ्यम्। तदाह सर्वाणि भूतानि प्राणिनो मा मां मित्रस्य चक्षुषा समीक्षन्तां सम्यक् पश्यन्तु मित्रदृष्ट्या सर्वे मां पश्यन्तु नारिदृष्ट्या सर्वेषां प्रियो भूयासमित्यर्थः, किञ्च अहमपि सर्वाणि भूतानि मित्रस्य चक्षुषा समीक्षे पश्यामि सर्वे मे प्रियाः सन्तु मित्रचक्षुः शान्तं भवति मित्रः कञ्चन न हन्ति मित्रं च कश्चन न हन्ति एवं परस्पराद्द्रोहेण सर्वानहिंसन्तो मित्रस्य चक्षुषा वयं समीक्षामहे पश्यामः॥ १८॥

दृते दृꣳह मा॥ ज्योक्ते सन्दृशि जीव्यासम्
ज्योक्ते सन्दृशि जीव्यासम्॥ १९॥

हे दृते वीर मां दृंह आदरार्थं पुनर्वचनम्. हे महावीर ते तव सन्दृशि सन्दर्शने अहं ज्योक्चिरं जीव्यासम्। जीवेयम्। जीवेराशीर्लिङि रूपम्। ज्योगिति निपातश्चिरार्थः। पुनरुक्तिरादरार्था ते सन्दृशि ज्योग्जीव्यासम्॥ १९॥

नमस्ते हरसे शोचिषे नमस्तेऽअस्त्वर्चिषे॥
अन्यास्तेऽअस्मत्तपन्तु हेतयः
पावकोऽअस्मभ्यꣳ शिवो भव॥ २०॥

ऋषिपुत्री लोपामुद्रा ऋषि अग्निर्देवता बृहतीछन्दो महावीरशान्तिकरणे विनियोगः। अयमर्थः अग्ने तुभ्यं नमः अस्त्युत्तरत्रावस्थितमत्रापि योज्यं किंभूतायतुभ्यंहरतिसर्वदुःखहरान्तस्मै हरसे पुनः किं भूताय शोचिषे दीप्तिकरणे तथा अर्चिषे अर्चिर्ज्वाला त-

द्रूपाय ते तुभ्यं नमोस्तु किमर्थं ते तव हेतयः ज्वालाः अस्मत्तका शादन्यानस्मद्विरोधिनः विरुद्धात्तपन्तु दहन्तु केवलमेवं त्वं पावकः शोधकः सन् अस्मभ्यम् शिवः कल्याणो भव इत्येतदर्थं च नमस्कृतोऽग्निः अस्माकं विरुद्धात् दहत्वस्माकं कल्याणाय भवत्वित्याशंसावाक्यार्थः अत्र हरसे हृञ् हरणे इत्यस्य सर्वधातुभ्योऽसुन्नित्यसुन् ॥ २० ॥

नमस्ते अस्तु विद्युते नमस्ते स्तनयित्नवे ॥
नमस्ते भगवन्नस्तु यतः स्वः समीहसे ॥ २१ ॥

४

दध्यङ्ङाथर्वणऋषिनुष्टुप्छन्द इन्द्रो देवता वीरशान्तिकरणे विनियोगः अयमर्थः हे रुद्र ते तुभ्यं नमः अस्तु किं भूताय विद्युते विद्युद्रूपाय तथा स्तनयित्नवे मेघरूपाय ते तुभ्यं नमः हे भगवन् सकलैश्वर्य्यसाधिन् ते तुभ्यं नमः केन कारणेन त्वं नमः क्रियसे यतः कारणात् स्वः स्वर्गं दातुं समीहसे चेष्टसे दातुमित्यवध्यायामः हे इन्द्र त्वं यतो यतः कारणात् स्वर्गार्थिनां स्वर्गं ददासि अतस्तुभ्यं विद्युद्रूपाय ईश्वराय नमोऽस्त्विति वाक्यार्थः ॥ २१ ॥

यतो यतः समीहसे ततो नोऽअभयं कुरु ॥
शन्नः कुरु प्रजाभ्योऽभयन्नः पशुभ्यः ॥ २२ ॥

दध्यङ्ङाथर्वणऋषिरिन्द्रो देवता त्रिष्टुप्छन्दो महावीरशान्तिकरणे विनियोगः हे इन्द्र यतो यतः यस्माद्यस्मात्कृतादुपचारादस्माकमभयं कर्तुं समीहसे चेष्टसे ततस्तस्मान्नोऽस्माकं प्रजाभ्यः

शंसुखं कुरु तया चः पशुभ्यो गवादिभ्यो अभयं कुर्विति पूर्वेणैव सम्बन्धः, अस्माकं त्वदुपचारं प्राप्याभयाय तदस्माकमस्मत्पुत्रादिगवादीनां वाऽभयं कुर्विति याञ्चावाक्यार्थः ॥ २२ ॥

सुमित्रिया नऽआपऽओषधयः सन्तु
दुर्मित्रियास्तस्मै सन्तु योऽस्मान्द्वेष्टि
यञ्च वयन्द्विष्मः ॥ २३ ॥

दध्यङ्ङाथर्वणऋषिरापो देवता यजुश्छन्दोनास्ति महावीराद्यन्तयोः शान्तिकरणे विनियोगः अयमर्थः आपश्चौषधयश्च, नोऽस्माकं सुमित्रियाः सन्तु योऽस्मान्द्वेष्टि अस्मासु द्वेषं करोति यं च वयं द्विषः यस्मिन्वयं द्वेषं कुर्मः तस्मै दुर्मित्रियाः सन्तु आपो ब्रह्मादयश्चास्माकं साधुमित्रवदभीष्टकारिण्यो भवन्तु अस्मच्छत्रूणां दुष्टामित्रवद्विरोधिन्यआपो भवन्तु इत्याशंसावाक्यार्थः ॥ २३ ॥

तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् ॥ पश्येम
शरदः शतं जीवेम शरदः शतꣳ शृणुयाम
शरदः शतं प्रब्रवाम शरदः शतमदीनाः
स्याम शरदः शतं भूयश्च शरदः शतात् ॥ २४ ॥

दध्यङ्ङाथर्वणऋषिः सूर्यो देवता उष्णिक्छन्दो महावीराद्यन्तयोः शान्तिकरणे विनियोगः ॥

अयमर्थः तच्चक्षुः चक्षुरिव त्रैलोक्यप्रकाशकमादित्यमण्डलमित्यर्थः तत्किं भूतं देवहितं पुनः किं भूतं पुरस्तात् उच्चरत् प्राच्यामु-

घात् पुनः किं भूतं शुक्रं शुक्लं निर्मलमिति यावत् तस्मादादित्यदर्शनाद्वयं शरदः शतं शृणुयामो यः सर्ववेदमयश्चादित्यः प्रत्यहं प्राच्यामुदितस्तत्प्रसादेन वयमविकलेन्द्रियाः शतवर्षाणि जीवेम एवं प्रब्रवामादेरर्थो ज्ञातव्यइत्याशंसावाक्यार्थः ॥ २४ ॥

स्वस्ति नऽइन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा

विश्ववेदाः ॥ स्वस्ति नस्तार्क्ष्योऽ अरिष्टनेमिः

स्वस्ति नो बृहस्पतिर्दधातु ॥ २५ ॥

अतः परं स्वस्त्ययनमन्त्राः ।

इन्द्रः नः स्वस्ति कल्याणं दधातु पूषा सूर्यः नः स्वस्ति दधातु इन्द्रः किं भूतः वृद्धश्रवाः बहुधनः श्रवः शब्दो धनवाचकः महाशब्दो वा वृद्धश्रवाः पूषा किं भूतः विश्ववेदाः सर्वधनः स्वस्ति दधातु तार्क्ष्यः किं भूतः अरिष्टनेमिः अनुपहतास्त्रः अहतवक्रधारः बृहस्पतिश्च नः स्वस्ति दधातु ॥ २५ ॥

द्यौः शान्तिरन्तरिक्षꣳ शान्तिः पृथिवी

शान्तिरापः शान्तिरोषधयः शान्तिः ॥

वनस्पतयः शान्तिर्विश्वे देवाः शान्ति

र्ब्रह्म शान्तिः सर्वꣳ शान्तिः शान्तिरेव

शान्तिः सामाशान्तिरेधि ॥ २६ ॥

सर्वारिष्टोपशमः अस्माकमस्त्वित्यध्याहार्यः तथा अन्तरिक्षं

शान्तिरस्तु ब्रह्मादयः शान्तिः शान्तयः सन्तु अत्र सर्वत्र च द्यौः प्रभृतिभिः शान्तिरित्यन्तैः पदैः तत्र स्वर्गाधिष्ठात्री देवता अस्माकमरिष्टोपशमनपूर्वकमभीष्टसम्प्रदानाय भवत्वित्याशंसावाक्यार्थः आपः शान्तिरित्यादिषु, "सुपां सुपो भवन्तीति" बहुवचनम् ॥२६॥

इति श्रीमहामहोपाध्यायश्रीशत्रुघ्नमिश्र विरचितायां मन्त्रार्थ दीपिकायां षडङ्गस्य व्याख्या समाप्ता ॥

अथ वैवाहिकादयो मन्त्राः, ततः प्रथममर्हणमन्त्रः (१)

वर्ष्मोऽस्मि समानानामुद्यतामिव सूर्यः ॥ इमन्तमभितिष्ठामि यो मा कश्चाभिदासति ॥ १ ॥

अहं समानानां समानजातीयानां वर्ष्मः अस्मि आच्छादको भवामि केषां कइव उद्यतां उदयगामिनां चन्द्रतारकादीनां सूर्य इव किं च यः कश्चिन्मां अभिदासति हिंसति तमिमं विष्टररूपतामात्रं अभिभूयिष्ठामि अभिभूय अधः कृत्वा तिष्ठामि अभिपूर्वो दासतिर्हिंसायां वर्त्तत इति कर्कभाष्यम् ॥ १ ॥

विराजो दोहोऽसि विराजो दोहमशीय मयि पाद्यायै विराजो दोहः ॥ २ ॥

हे जल त्वं विराजः विशिष्टदीप्तेर्दोहः प्रपूर्णोऽसि अहं वि-

(१) अत्र विवाहादिकर्मो पयोगिनामन्यशाखीयानां पारस्कराचार्य्यकृतगृह्यसूत्रसन्दर्भपठितानां मन्त्राणां केचिद्विनि योगः पन्ते नन पठन्तीत्यत्रविकल्पोऽस्तीति बुधैर्ज्ञेयः। तेषामर्थपरिज्ञानं जयरामरामकृष्णगदाधरादयाचार्य्यप्रणीतभाष्यादवगन्तव्यम् ॥

राजो दोहो विशिष्टदीप्तिप्रपूरकं त्वां अशीय गृह्णामि विराजो दोहस्त्वं मयि पाद्यायै पाद्याय भव तथा च त्वामभिमन्त्रयामि मम पादस्य विशिष्टं दीप्तिं कुर्विति वाक्यार्थं, अशीयेति अशगति-दीप्त्यादानेष्वित्यस्य धातोः आशिषि लिङि रूपम् ॥ २ ॥

आपस्थ युष्माभिः सर्वान्
कामानवाप्नवानीति ॥ ३ ॥

हे आपः यतो यूयं आपः स्थ आपः भवथ आप्नुवन्तीत्यापः आपूरयिथ अतोऽहं युष्माभिः गृहीताभिः सर्वान्कामानवाप्नवानि प्राप्नुयां आप्नवानि इति अप्लृव्याप्तावित्यस्य धातोः आप्नुवन्तीत्यर्थे क्विप् रूपम् ॥ ३ ॥

समुद्रं वः प्रहिणोमि स्वाँ योनिमभिगच्छत ॥
अरिष्टास्माकं वीरा मापरासेचि मत्पयः ॥ ४ ॥

हे आपः वः युष्मान् समुद्रं प्रहिणोमि प्रस्थापयामि मया प्रहिता यूयं स्वां योनिं समुद्रं अभिगच्छत यूयं किं भूताः अस्माकं अरिष्टाः अहिंसकाः वीरा उत्कृष्टा मत्पयः मदीयपानयोग्यं मत्पयस्तत्पुनः मा परासेचि न चरत नापगच्छतु तथा च तदिहैव तिष्ठत्वित्यर्थः मदीयपानयोग्यातिरिक्ताः सर्वाः आपः ममाहिंसकाः सन्त्यः समुद्रं गच्छन्तु मत्पानयोग्यं पयः अत्रैव तिष्ठत्विति वाक्यार्थः ॥ ४ ॥

आ मा गन्यशसा सᳫं सृज वर्चसा ॥ तं मा
कुरु प्रियं प्रजानामधिपतिं पशूनामरिष्टिं
तनूनाम् ॥ ५ ॥

शान्तिरस्तु ब्रह्मादयः शान्तिः शान्तयः सन्तु अत्र सर्वत्र च द्यौः प्रभृतिभिः शान्तिरित्यन्तैः पदैः तत्र स्वर्गाधिष्ठात्री देवता अस्माकमरिष्टोपशमनपूर्वकमभीष्टसम्प्रदानाय भवत्वित्याशंसावाक्यार्थः आपः शान्तिरित्यादिषु, "सुपां सुपो भवन्तीति" बहुवचनम् ॥२६॥

इति श्रीमहामहोपाध्यायश्रीशत्रुघ्नमिश्रविरचितायां मन्त्रार्थदीपिकायां षडङ्गस्य व्याख्या समाप्ता ॥

अथ वैवाहिकादयो मन्त्राः, ततः प्रथममर्हणमन्त्रः (१)

**वर्ष्मोऽस्मि समानानामुद्यतामिव सूर्यः ॥ इमन्तमभितिष्ठामि यो मा कश्चाभिदासति ॥ १ ॥**

अहं समानानां समानजातीयानां वर्ष्मः अस्मि आच्छादको भवामि केषां कइव उद्यतां उदयगामिनां चन्द्रतारकादीनां सूर्यइव किं च यः कश्चित्मां अभिदासति हिंसति तमिमं विष्टररूपतामाप्तं अभिभूयिष्ठामि अभिभूय अधः कृत्वा तिष्ठामि अभिपूर्वी दासतिर्हिंसायां वर्त्तत इति कर्कभाष्यम् ॥ १ ॥

**विराजो दोहोऽसि विराजो दोहमशीय मयि पाद्यायै विराजो दोहः ॥ २ ॥**

हे जल त्वं विराजः विशिष्टदोग्ध्र्या दोहः प्रपूर्णोऽसि अहं वि-

(१) अत्र विवाहादिकर्मोपयोगिनामन्यशाखीयानां पारस्कराचार्य्यकृतगृह्यसूत्रसन्दर्भपठितानां मन्त्राणां केचिद्दिनि योगः परन्तु ... पठन्तीत्यत्रविकल्पोऽस्तीति बुधैर्ज्ञेयः। तेषामर्थपरिज्ञानं जयरामरामकृष्णगदाधराद्याचार्य्यप्रणीतभाष्यादवगन्तव्यम् ॥

राजो दोहो विशिष्टदीप्तिप्रपूरकं त्वां अशीय गृह्णामि विराजो दोहस्त्वं मयि पाद्यायै पाद्याय भव तथा च त्वामभिमन्त्रयामि मम पादस्य विशिष्टं दीप्तिं कुर्विति वाक्यार्थं, अशीयेति अशगतिदीप्त्यादानेष्वित्यस्य धातोः आशिषि लिङि रूपम् ॥ २ ॥

आपस्थ युष्माभिः सर्वान्
कामानवाप्नवानीति ॥ ३ ॥

हे आपः यतो यूयं आपः स्थ आपः भवथ आप्नुवन्तीत्यापः आपूरयिथ अतोऽहं युष्माभिः गृहीताभिः सर्वान्कामानवाप्नवानि प्राप्नुयां आप्नवानि इति अप्लृव्याप्तावित्यस्य धातोः आप्नुवन्तीत्यर्थे क्विप् रूपम् ॥ ३ ॥

समुद्रं वः प्रहिणोमि स्वाँ योनिमभिगच्छत ॥
अरिष्टास्माकं वीरा मापरासेचि मत्पयः ॥ ४ ॥

हे आपः वः युष्मान् समुद्रं प्रहिणोमि प्रस्थापयामि मया प्रहिता यूयं स्वां योनिं समुद्रं अभिगच्छत यूयं किं भूताः अस्माकं अरिष्टाः अहिंसकाः वीरा उत्कृष्टा मत्पयः मदीयपानयोग्यं मत्पयस्तत्पुनः मा परासेचि न त्यरत नापगच्छतु तथा च तदिहैव तिष्ठत्वित्यर्थः मदीयपानयोग्यातिरिक्ताः सर्वाः आपः ममाहिंसकाः सन्त्यः समुद्रं गच्छन्तु मत्पानयोग्यं पयः अत्रैव तिष्ठत्विति वाक्यार्थः ॥ ४ ॥

आ मा गन्यशसा सᳫं सृज वर्चसा ॥ तं मा कुरु प्रियं प्रजानामधिपतिं पशूनामरिष्टिं तनूनाम् ॥ ५ ॥

हे जल मा मां यशसा आगन् आगमय मां यशस्विनं कुर्विं-त्यर्थः, किं च वर्चसा तेजसा मा मां संसृज संसृष्टं कुरु तथा च मा मां प्रजानां प्रियं कुरु पशूनां गवादीनां अधिपतिं कुरु तनूनां शरीरावयवानां अरिष्टं आपद्रहितं कुरु रिष्टिरापत् आगमन्निति गमधातोरन्तर्भावितण्यंतस्य लोट् मध्यमपुरुषैकवचने "वा छन्दसी-ति" विकल्पेन सेर्हिरादेशो न सम्भवति "मो नो धातोरिति" म-कारस्य नकारः ॥ ५ ॥

मित्रस्य त्वा चक्षुषा प्रतीक्षे ॥ ६ ॥

हे मधुपर्क त्वा त्वां मित्रस्य सूर्यस्य चक्षुषा प्रतीक्षे पश्याम्य-हमादित्येन चक्षुर्दानेनानुगृहीतः त्वां मधुपर्कविचक्षणं पश्यामीति वाक्यार्थः ॥ ६ ॥

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां
पूष्णो हस्ताभ्यां प्रतिगृह्णामि ॥ ७ ॥

हे मधुपर्क त्वा त्वां प्रतिगृह्णामि कस्मिन् सति सवितुर्देवस्य प्रसवे अभ्यनुज्ञाने सति संमताविति यावत् प्र पूर्वः सुवतिरभ्यनु-ज्ञाने वर्ततइत्युवटः, गुणाविष्टस्य, केन ग्रहणं अश्विनोः अश्विनीकु-मारयोर्बाहुभ्यां तथा पूष्णः आदित्यस्य हस्ताभ्यां तथा च तैरभ्य-नुज्ञानादिभिरनुगृहीतोऽहं त्वां गृह्णामीति वाक्यार्थः ॥ ७ ॥

नमः श्यावास्यायान्नशने यत्तऽआविद्धं
तत्ते निष्कृन्तामि ॥ ८ ॥

मधुपर्कं प्रत्याह हे नमस्य नमस्कारार्ह आवास्यायानिति

मिश्रयामि त्वामित्यध्याहार्यम् किं च ते तव अशने भोजने यत् आविद्धं उपहितं ते तव तत् निः क्रन्तामि अपसारयामि, आवास्य।यानिति व्येङ्गतावित्येतस्मादवपूर्वादाङ्पूर्वाच्च मिश्रणमर्थः वर्णागमो वर्णविपर्ययश्चेति प्रथमसकारस्थाने शकारः छान्दसत्वाद्विसर्गश्च ॥ ८ ॥

यन्मधुनो मधव्यं परमꣳ रूपमन्नाद्यम्
तेनाहं मधुनो मधव्येन परमेण रूपेणान्नाद्येन परमो मधव्योऽन्नादोऽसानि ॥ ९ ॥

मधुनः यत् मधव्यं मधुरं परमसुत्कृष्टं अन्नाद्यं अन्नाद्यमिव यथा अन्नाद्यमुपभुक्तं बलादिकमादधति तथा रूपं स्वरूपं तेन मधव्येन इत्यत्र द्वितीयार्थे तृतीया तथा च मधुनः मधव्यं परमं अन्नाद्यं च रूपं अहं असानि अश्नानि भक्षयामि मधव्यमित्यादि पुनर्विशेषणमादरातिशयार्थम् अहं किं भूतः परमः उत्कृष्टः मधव्यः मधुरशीलः अन्नादः अन्नमत्तीत्यन्नादः ॥ ९ ॥

वाङ्मऽआस्येऽस्तु ॥ नसोर्मे प्राणोऽस्तु ॥
अक्ष्णोर्मेचक्षुरस्तु ॥ कर्णयोर्मे श्रोत्रमस्तु ॥
बाह्वोर्मे बलमस्तु ॥ ऊर्वोर्मे ओजोऽस्तु ॥
अरिष्टानि मेऽङ्गानि तनूस्तन्वा मे
सह सन्तु ॥ १० ॥

मे मम मुखे वाक् वचनमस्तु, मे मम नसोः नासिकयोः प्राणं श्वासवायुः अस्तु, मे मम अक्ष्णोः गोलकयोश्चक्षुरिंद्रियमस्तु, कर्णयोः

कर्णशष्कुल्योः श्रोत्रमिंद्रियमस्तु, बाह्वोर्बलं सामर्थ्यमस्तु, ऊर्वोरोजः तेजः अङ्गानि शिरःप्रभृतीनि अरिष्टानि आपद्रहितानि भवन्तु, मे मम तन्वा शरीरेण सह तनूः शरीरावयवाः अरिष्टाः सन्तु, अनेन स्पर्शेन मम मुखाद्यवयवेषु वचनादिना शक्तिर्भवतु आपच्छून्यता भवत्विति वाक्यार्थः ॥ १० ॥

माता रुद्राणां दुहिता वसूनाᳪ स्वसाऽऽदि-
त्यानाममृतस्य नाभिः ॥ प्रणुवोचं चिकितुषे
जनाय मा गामनागामदितिं वधिष्ट ॥
ममचामुष्य च उभयोः पाप्मा हतः
ॐमुत्सृजत तृणान्यत्तु ॥ ११ ॥

अतो ऽहं यजमानस्य चिकितुषे जिज्ञासमानाय शुश्रूषवे जनाय प्रनुवोचं अत्र न मा ङ्योगइत्यादिना अडागमनिषेधः पुनः पुनरुक्तवानस्मि अत्र शुश्रूषवे नोपदेशिषु महत्स्विति चिकितुषे चेतनवते इत्युक्तं किं वदसि उक्तवानस्मि मा गां वधिष्ट मा मां हिंसीः मां किं भूतां अनागां अनपराधां अदितिं दितिः खंडनं हिंसा सा यस्या नास्ति सा अदितिः किं च यतः सा रुद्राणां माता वसूनां दुहिता आदित्यानां स्वसा अमृतस्य देवानां भक्ष्यस्य नाभिरुत्पत्तिस्थानं तथा च एतावतापि सर्वथा अहिंस्येति भावः, मम चार्हणीयस्य अमुष्य चार्हणाकर्तुः पाप्मा पापं हतःहन्तु ओमिति स्वीकारे अनु उत्सृज गां महद्वचनात्पश्चान्मुञ्चेदित्यर्थः प्रणुवोचमित्यत्रानुशब्दउत्सृजत्यत्रार्थेनेति छान्दसत्वादकारलोपः तदनंतरं तृणान्यत्तु मुक्ता सती तृणानि खादतु अनाशंसावाक्यार्थः ॥ ११ ॥

जरां गच्छ परिधत्स्व वासो भवाकृष्टीनाम-
भिशस्ति पावा ॥ शतं च जीव शरदः सुवर्चा
रयिं च पुत्रामनुसँव्ययस्वायुष्मतीदं
परिधत्स्व वासः ॥ १२ ॥

हे आयुष्मति कन्यके जरां गच्छ चिरजीविनी भवेत्यर्थः वासः परिधत्स्व वस्त्रं परिधेहि वस्त्रविमुक्ता मा कदाचिदपि भवेत्यर्थः आकृष्टीनां भव आकृष्टी भव प्रथमायां षष्ठी, आकृष्टी मनोहरा अभिशस्तिपावा अभिशस्तिं शयनं तत्र पावा पवित्रा भव किं च शरदः वर्षाणां शतं जीव किं भूतः सुवर्चाः शोभनदीप्तियुक्ता किं च रयिं धनं अनुसंव्ययस्व संवृणु धारयेत्यर्थः न केवलं धनं पुत्रांश्च धारय अत्राप्याशंसैव वाक्यार्थः ॥ १२ ॥

याऽअकृन्तन्नवयंयाऽअतन्वत ॥ याश्च देवीस्त-
न्तूनभितोऽततन्यता स्त्वादेवीर्जरसे संव्यय-
स्वायुष्मतीदं परिधत्स्व वासः ॥ १३ ॥

हे आयुष्मति या देवीः देव्यस्तन्तून् अकृन्तन् कर्तितवत्यः याश्च तंतून् अवयन् उत्पादितवत्यः याश्च अतन्वत विस्तारितवत्यः ताः देवीस्त्वां संव्ययस्व संव्ययन्तु परिधापयन्तु अर्थाद्वासः तथा सति त्वं च इदं वासः अततन्यत अततन्यतेतु: विस्तारय अभितः सर्वतः परिधत्स्व किमर्थं जरसे दीर्घायुष्ट्वाय संव्ययस्व परिधापयतु अवयन्निति वेञ् तन्तुसन्तानइत्यस्य, देवीरिति प्रथमा बहुवचने

रूपं, वा छन्दसीति दीर्घत्वम् अततन्थेति तनुविस्तार इत्यस्य लिटि, संव्ययस्वेति तिङां तिङो भवन्तीति प्रथमपुरुषबहुवचने मध्यमपुरुषैकवचनम् ॥ १३ ॥

परिधास्यै यशोधास्यै दीर्घायुत्वाय जरदष्टि-
रस्मि ॥ शतं च जीवामि शरदः पुरूची
रायस्पोषमभिसंव्ययिष्ये ॥ १४ ॥

अहं परिधास्ये परिधानं करिष्यामि यशोधास्ये कीर्त्तिं धारयामि हेतुहेतुमद्भावो बोद्धव्यः अनेन परिधानेन यशोभविष्यतीत्यर्थः किं च अनेन परिधानेन शरदः वर्षस्य शतं जीवामि पुरूचीः बहु रायस्पोषाय धनवृद्ध्यर्थम् एतावद्भिः प्रयोजनैः अभिसंव्ययिष्ये अभिसर्वतो भावेन सम्भारयिष्यामीत्यर्थः, किं च दीर्घायुष्ट्वाय चिरञ्जीवित्वाय च जरदष्टिः वृद्धो ऽस्मि भवामि अनेनेति शेषः, सम्यग्व्ययिष्ये आवरणं करिष्यामीत्युपसंहारः पुनः पुनरुक्ते आदरातिशयार्थः, रायस्पोषमिति "सुपां सुपो भवन्तीति" चतुर्थ्यां द्वितीया, संव्ययिष्ये व्यञ्संवरण इत्यस्य रूपम् ॥ १४ ॥

यशसा मा द्यावा पृथिवी यशसेन्द्रा बृहस्पती ॥
यशोभगस्य मा विदद्यशो मा प्रतिपद्यताम् ॥१५॥

द्यावापृथिव्यो मा मा छादयेताम् इति क्रियापदमध्याहृतं केन यशसा किं च इन्द्राबृहस्पती यशसा माच्छादयेताम् किं च यशः मा मां अविदत् प्राप्नोतु न केवलं यशो भगस्य सौभाग्यं च

मा अविदत् किं च मा मां प्रतिपद्यताम् प्रतिगच्छतु विश्वेदेवा नौ आवयोः हृदयानि हृदयं समञ्जन्तु आपः पानीयानि समञ्जन्तु नौ हृदयमित्यनेन सम्बन्धः पानीयेनोत्सर्गपूर्वकं दत्तं यत्तव हृदयसंमतं भवतु तथा मातरिश्वा आवयोः प्राणयोः नौ आवां सन्दधातु संयोजयतु तथा धाता प्रजापतिः नौ आवां सन्दधातु तथा उदेष्ट्री इच्छाकर्त्री देवता कामदेवः नौ आवां सन्दधातु अत्र उदेष्ट्रीति इषुइच्छायामित्यस्य उत्पूर्वस्य तृचि छान्दसत्वादिट् न भवति देवताभिप्रायेण ङीप् स्त्रीत्वविवक्षायाम् ॥ १५ ॥

को ऽदात्कस्मा ऽअदात्कामो ऽदात्का-

मायादात् ॥ कामो दाता कामः

प्रतिगृहीता कामैतत्ते ॥ १६ ॥

कः अदात् दत्तवान् कस्मै अदात् इति अयं प्रश्नः अत्रोत्तरं कामः अदात् कामाय अदात् यतः कामो दाता कामः प्रतिगृहीता अतएव हे काम अभिलाष एतद्देयं वस्तु कन्यादिकं तव कामशब्देनेच्छाभिधीयते यतः इच्छामेव सत्यां दीयते प्रतिगृह्यते च तथा च तत्प्राधान्यप्रतिपादनार्थ दातृत्वप्रतिगृहीतृत्वं च कामस्यैवोक्तं तेन कामस्तुतिरत्र वाक्यार्थः ॥ १६ ॥

द्यौस्त्वा ददातु पृथिवी त्वा प्रतिगृह्णातु ॥१७॥

व्यक्तार्थमेतत् हे कन्यके तवायं पिता आकाशमिव वृष्ट्यादिद्वारा सर्वोपकारकं यथाकाशं तद्वत्पितापि अहं पृथिवीव सर्वाश्रया तथाऽहमपि त्वदाश्रयइत्यर्थः ॥ १७ ॥

यदैषि मनसा दूरं दिशोऽनुपवमानो वा ॥
हिरण्यपर्णो वै कर्णः स त्वा
मन्मनसां करोतु ॥ १८ ॥

हे कन्ये यत् मनसा दूरं एषि गच्छसि पितृकुलतो बहिर्भूता कुत्र केन नीयतइति मनसा सोत्कण्ठा भवसीति यावत् तत्र दिशः प्राच्यादिदिशः पवमानो वा शब्दः समुच्चये हिरण्यपर्णः हिरण्यं पर्णं रथो यस्य सः हिरण्यपर्णः सूर्यः वैकर्णः विकर्णे कोटरे तिष्ठति वैकर्णः अग्निः ते दिग्वायुसूर्याग्नयः त्वां मन्मनसां करोतु मद्गते हृदयां कुर्वन्तु सा अत्र कन्यकोत्कण्ठानिवृत्तिः स्वहृदयैक्याशंसा-वाक्यार्थः ॥ १८ ॥

अघोरचक्षुरपतिघ्न्येऽधिशिवा पशुभ्यः सुमनाः
सुवर्चाः ॥ वीरसूर्देवकामा स्योना शन्नो भव
द्विपदे शं चतुष्पदे ॥ १९ ॥

हे कन्यके अपतिघ्नी एधि भव किं भूता त्वं अघोरचक्षुः अघोरं सौम्यं चक्षुः स्वपतिविषये यस्याः सा तथा किं च पशुभ्यः गवादिभ्यः शिवा कल्याणकरी सुमनाः शोभनमनाः सुवर्चाः शोभनदीप्तिः वीरसूः वीरप्रसविनी देवकामा देवं देवनं क्रीडनं कामयतइति देवकामा स्योना सुखिनी द्विपदे मनुष्ये चतुष्पदे पशुषु शं कल्याणकरी नः अस्माकं भवति सर्वत्र सम्बध्यते ॥ १९ ॥

सोमः प्रथमो विविदे गन्धर्वो विविदऽउत्तरः ॥
तृतीयोऽग्निष्टे पतिस्तुरीयस्ते मनुष्यजाः ॥२०॥

कन्यास्तुतिमाह ते त्वां सोमः चन्द्रः प्रथमं जन्मसमयएव विविदे लब्धवान् उत्तरः द्वितीयः गन्धर्वः त्वां विविदे लब्धवान् तृतीयस्त्वां अग्निः पतिर्विविदे तथा च प्रथमं सोमगन्धर्ववह्निभिः स्त्रियः भुक्ताः अतएव "सोमः शौचं ददौ स्त्रीणां गन्धर्वश्च शुभां गिरं" पावकः सर्वभक्षित्वं तेन शुद्धा हि योषितः, इत्यभिप्रायः तथा ते तव तुरीयः पतिर्मनुष्यजाः अहमित्यर्थः ॥ २० ॥

सोमोऽददद्गन्धर्वाय गन्धर्वोऽददग्नये ॥ रयिं
च पुत्राँश्चादादग्निर्मह्यमथोऽ इमाम् ॥ २१ ॥

तत्किमेतेषामेव स्त्वविषयाः इत्याशंक्याह सोमः इमां गन्धर्वायाददत् गन्धर्वइमामग्नये अददत् अग्निश्च अथोऽनन्तरमिमां मह्यमदात् दत्तवान केवलमिमां किं तु रयिं च धनमपि पुत्रांश्च पुत्रानपि मह्यमग्निरदत्तवान् ॥ २१ ॥

सा नः पूषा शिवतमा मेरयसानऽऊरू उशती
विहर ॥ यस्यामुशन्तः प्रहराम शेपं यस्या-
मुकामा बहवो निविष्ट्यै ॥ २२ ॥

सा इत्थं नोऽस्मान् मेरय मा ईरयतु अनुरक्तां करोतु मा त्यजतु किं भूता पूषा वृद्धिकरी शिवतमा कल्याणतमा किं च यस्यां उशन्तः कामयमानाः वयं शेपं शिश्नं इन्द्रियं प्रहरामः क्षिपामः त्वयि सा त्वं ऊरुद्वयं विहर विवृत्तं कुरु प्रसारय त्वं किं भूता नोऽस्मान् उशती इच्छन्ती वश कान्तौ इत्यस्य उशन्तइति उशती

इति च किं च त्वयि जहे बहवः कामाः अभिलषिता निविष्ठे निवेशिताः, सर्वप्रायश्चित्तमन्त्राः स्नानप्रकरणे लिखिताः ॥ २२ ॥

ऋताषाड् ऋतधामाग्निर्गन्धर्वः ॥ स नऽइदं

ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् ॥ २३ ॥

योऽग्निर्गन्धर्वः गन्धर्वरूपः तस्मै अग्नये स्वाहा वाट् यत्स्वाहा कृतं सुहुतं तत् वाट् सुष्ठु वहत्वित्यर्थः किं भूतः ऋता षाट् सत्य-सहकृतः पुनः किं भूतः ऋतधामा ऋतं सत्यं धाम स्थानं यस्य सः ऋतधामा किमर्थं स्वाहा क्रियतइत्याह इदं ब्रह्मज्ञानं क्षत्रं वीर्यं च सः नः पातु रक्षतु ॥ २३ ॥

ऋताषाड्ऋतधामाग्निर्गन्धर्वस्तस्यौष

धयोऽप्सरसो मुदो नाम ताभ्यः स्वाहा ॥२४॥

योऽयमग्निर्गन्धर्वरूपस्तस्याग्नेः गन्धर्वस्य ओषधयो व्रीह्यादयः अप्सरसः गन्धर्वाणामप्सरसो भवन्ति किं भूता मुदो नाम मुदनाम इत्यर्थः, ताभिः सर्वे मोदयन्तइति मुदः ताभ्यः स्वाहा सुहुतं भवन्तु तथा च ता अप्यस्माकं ज्ञानं वीर्यं च रक्षन्त्विति वाक्यार्थः ॥ २४ ॥

सꣳहितो विश्वसामा सूर्यो गन्धर्वः ॥

स नऽइदं ब्रह्म क्षत्रं पातु तस्मै

स्वाहा वाट् ॥ २५ ॥

सूर्यो गन्धर्वः संहितः दिवसं रात्रिं च सन्दधातीति संहितः विश्वसामा सर्वसामवेदमयः अन्यत् समानम् ॥ २५ ॥

सꣳहितो विश्वसामा सूर्यो गन्धर्वस्त

स्यमरीचयोऽप्सरस आयुवो नाम

ताभ्यः स्वाहा ॥ २६ ॥

तस्य सूर्यस्य गन्धर्वस्य मरीचयो रश्मयः अप्सरसः आयुवोनाम ताभ्य आयुवोनाम आयुवो नामन्यः आयुः वन्ति योजयन्तीति आयुवः अन्यत्समानम् ॥ २६ ॥

सुषुम्णः सूर्यरश्मिश्चन्द्रमा गन्धर्वः ॥

स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा

वाट् ॥ २७ ॥

यश्चन्द्रमा गन्धर्वरूपः सुषुम्णः सुषुम्णनामा सूर्यरश्मिश्च अन्यत्समानम् ॥ २७ ॥

सुषुम्णः सूर्यरश्मिश्चन्द्रमा गन्धर्वस्तस्य

नक्षत्राण्यप्सरसो भेकुरयो नाम

ताभ्यः स्वाहा ॥ २८ ॥

तस्य चन्द्रमसः नक्षत्राण्यप्सरसः किं भूता भेकुरयो नाम॥२८॥

इषिरो विश्वव्यचा वातो गन्धर्वः ॥ स

न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् ॥२९॥

यो वातो गन्धर्वः इषिरः गमनस्वभावः विश्वव्यचाः सर्वगतः अपरं समानम् ॥ २९ ॥

इषिरो विश्वव्यचा वातो गन्धर्वस्तस्यापो ऽप्सरस ऊर्ज्जो नाम ताभ्यः स्वाहा ॥ ३० ॥

वातः गन्धर्वस्तस्याप्सरसः अपः जलानि ऊर्ज्जो नाम्नः ॥३०॥

भुज्युः सुपर्णो यज्ञो गन्धर्वः ॥ स नऽइदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् ॥ ३१ ॥

यो यज्ञो गन्धर्वः किं भूतः भुज्युः भुनक्ति पालयति सर्वाणि भूतानि इति भुज्युः सुपर्णः शोभनगतिरितियावत् अन्यत्समानम् ॥

भुज्युः सुपर्णो यज्ञो गन्धर्वस्तस्य दक्षिणाऽअप्सरसस्तावा नाम ताभ्यः स्वाहा ॥ ३२ ॥

यः यज्ञो गन्धर्वस्तस्याप्सरसो दक्षिणाः किं भूतास्तावा नाम दक्षिणायां दत्तायां यज्ञस्तोतव्यो भवतीत्यभिप्रायः अपरं समानम् ॥ ३२ ॥

प्रजापतिर्विश्वकर्म्मा मनो गन्धर्वः ॥ स नऽइदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् ॥३३॥

यन्मनो गन्धर्वः प्रजापतिः प्रजानामीश्वरः विश्वकर्मा विश्वकर्मयुक्तस्य तद्व्यापारेण विश्वस्य निर्माणात् ॥ ३३ ॥

प्रजापतिर्विश्वकर्म्मा मनो गन्धर्वस्तस्य ऽऋक्सामान्यप्सरसऽएष्टयो नाम ताभ्यः स्वाहा ॥ ३४ ॥

तस्य मनसो गन्धर्वस्तस्याप्सरसः ऋक्सामानि ऋचः सामानि च एष्टयो नाम अतिशयेच्छानाम यासां आइष्टिः अतिशयेच्छा तथा च पुत्रादीच्छया यागादिमन्त्रप्रयुक्तपुत्रादिः सम्पद्यत इत्यभिप्र.यः, अभ्यातानसंज्ञकाश्चित्तमित्यादि त्रयोदशमन्त्राः यथा तत्र शेषपठितप्रजापतिर्जयानिन्द्रायेत्यादिमंत्रे मह्यं प्रजापतिर्जयं ददात्विति प्रशंसा भविष्यति सैवात्रापि, मन्त्रे चकारेण समुच्चितं, चित्तं चेति चित्तं ज्ञानं मह्यं ददात्विति शेष, एवं सर्वत्र चित्तः परिच्छेद', आकूतं चाभिमुख्यं, आकूतिश्चात्मनो धर्मविशेषो येन मनः प्रेरणं क्रियते, चित् ज्ञानं विज्ञातिश्च विज्ञातार्थः, मनसश्च प्रसिद्धं, शक्तिविच्छेदः, शक्वरी च प्रसिद्धा, दर्शश्च प्रसिद्धः, पौर्णमासं प्रसिद्धं, अमावस्या प्रसिद्धा, बृहद्रथन्तरं च सामविशेषः ३४

प्रजापतिर्ज्जयानिन्द्राय वृष्णे प्रायच्छदुग्रः
पृतना ज्येषु ॥ तस्मै व्विशः समनमन्त
सर्व्वाः सऽउग्रः सऽइहव्यो बभूव स्वाहा ॥३५॥

प्रज.पतिः परमेश्वरः इन्द्राय जयान् जयकर्तृकान्मन्त्रान्ददौ प्रयच्छत् दत्तवान् किं भूताय वृष्णे वृषनाम्ने अभिमनोरथवर्षणाय प्रजापतिः किं भूतः पृतना ज्येषु असुरसेनाविजयाख्यकर्मसु उग्रः विपक्षतेजोऽभिमानी यतश्च प्रजापतिः उग्रो बभूव सर्वतेजोऽभिभावी बभूव स इहव्यो बभूव हव्यद्रव्यवाहो बभूव एतावद्गुणविशिष्टः प्रजापतिरतः जयं दत्तवान् इति कथं दत्तवान् हि यतः कारणात् तस्मै प्रजापतये सर्वा विशः प्रजाः समनमन्तः सम्यक् प्रणामं कृतवत्यः प्रजापतिं स्तौति प्रजापतिर्मह्यं जयं ददात्विति तात्पर्यम् ॥ ३५ ॥

ओंअग्निर्भूतानामधिपतिः समावत्वस्मिन्
ब्रह्मण्यस्मिन् चत्रे स्यामा शिष्यस्यां पुरोधाया-
मस्मिन् कर्मण्यस्यां देवहूत्याᳪं स्वाहा ॥ ३६ ॥

अथाध्याताताना व्याष्टादशमन्त्राः । अग्निर्भूतानामधिपतिः स-मावत्वस्मिन्ब्रह्मण्यस्मिन् चत्रे वीर्ये अस्यां आशिषि आशास्ये अर्थे अस्यां पुरोधायां अस्मिन् कर्मणि विवाहे अस्यां देवहूत्यां देवाह्वाने हूतिराह्वानं तस्यां स्वाहा सुहुतमस्तु ॥ ३६ ॥

इन्द्रो ज्येष्ठानामधिपतिः ॥ ३७ ॥

समावत्वस्मिन्नित्यादि वाक्यानि स्वाहान्तानि वच्यमाणेषु सप्तदशसु मन्त्रेषु योज्यानि इन्द्रो ज्येष्ठानामधिपतिः अन्यत्स-मानम् ॥ ३७ ॥

यमः पृथिव्यामित्यादि ॥ ३८ ॥

वायुरन्तरिक्षस्याधिपतिरित्यादि ॥ ३९ ॥

सूर्यो दिपोऽधिपतिरित्यादि ॥ ४० ॥

चन्द्रमा नक्षत्राणामधिपतिरित्यादि ॥ ४१ ॥

बृहस्पतिर्ब्रह्मणोऽधिपतिरित्यादि ॥ ४२ ॥

मित्रः सत्यानामधिपतिरित्यादि ॥ ४३ ॥

वरुणोऽपामधिपतिरित्यादि ॥ ४४ ॥

समुद्रः स्रोत्यानामधिपतिरित्यादि ॥ ४५ ॥

स्रोत्यानां नदीनां ॥ ४५ ॥

अन्नᳪ साम्राज्यानामधिपतिरित्यादि ॥ ४६ ॥

साम्राज्यानामैश्वर्य्याणां ॥ ४६ ॥

सोमऽओषधीनामधिपतिरित्यादि ॥ ४७ ॥

सविता प्रसवानामधिपतिरित्यादि ॥ ४८ ॥

रुद्रः पशूनामधिपतिः ॥ ४९ ॥

त्वष्टारूपाणामधिपतिः ॥ ५० ॥

विष्णुः पर्वतानामधिपतिः ॥ ५१ ॥

मरुतो गणानामधिपतयः ॥ ५२ ॥

पितरः पितामहाः परेवरे ततास्ततामहाः ॥

इहमावन्त्वित्यादि ॥ ५३ ॥

पितरः पितामहाः परे प्रपितामहा. अपरे प्रपितामहात्पूर्वे ततास्तस्मादपि पूर्वे ततामहास्ततोऽपि पूर्वे एवं षट्पुरुषा उक्ताः बहुवचनं गौरवार्थं ते मामस्मिंल्लोकेऽवन्त्वित्यादि ॥ ५३ ॥

अग्निरैतु प्रथमो देवतानाᳪ सोस्यै प्रजां
मुञ्चतु मृत्युपाशात् ॥ तदयᳪ राजा
वरुणोऽनुमन्यतां यथेयᳪ स्त्री
पौत्रमघन्नरोऽदात्स्वाहा ॥ ५४ ॥

अग्निरासमन्तादैतु आगच्छतु देवतानामिन्द्रादीनां प्रथमो मुख्यः आगतः सन् सोऽग्निः अस्यै अस्याः कन्यायाः प्रजां पुत्रादिकं मृत्युपाशात् मृत्योः पाशात् बन्धनात् मरणात् मुञ्चतु तदयं

राजा वरुणः अनुमन्यतां स्वीकरोतु कथं मोचयतु यथेयं स्त्री पौत्रमघं भवदुःखं प्राप्य न रोदात् शोकं प्राप्य न रोदिष्यति तथा वरुणानुभवतोऽग्निस्तथा मोचयतु यथा इयं स्त्री पुत्रवियोगदुःखं नानुभवतीति वाक्यार्थः, रोदादिति रुदिर् अश्रुविमोचने इत्यस्य लोट्रूपम् ॥ ५४ ॥

इमामग्निस्त्रायतां गार्हपत्यः प्रजामस्यै
नयतु दीर्घमायुः । अशून्योपस्था जीवतामस्तु
माता पौत्रमानन्दमभिविबुध्यतामियꣳ
स्वाहा ॥ ५५ ॥

गार्हपत्योऽग्निः इमां त्रायतां रक्षतु तथा अस्यै कन्यायै प्रजा पुत्रादिकं नयतु प्रापयतु दीर्घं आयुः नयतु तथा सति इयं अशून्योपस्था अवन्ध्या सफलप्रसवा नित्यं भर्तृयुक्ता भव तथा जीवतां दीर्घायुषां माताऽस्तु जीववत्सा भवतु इत्यर्थः, तथा पौत्रं पुत्रभवमानन्दं सुखमभिबुध्यतां सर्वभावेनानुभवतु ॥ ५५ ॥

स्वस्ति नो ऽअग्ने दिव आ पृथिव्या विश्वानि धेह्य-
यथा यजत्र ॥ यदस्यां महि दिवि जातं प्रशस्तं
तदस्मासु द्रविणं धेहि चित्रꣳ स्वाहा ॥ ५६ ॥

हे अग्ने यजत्र यजंतं त्रायतइति यजत्र नोऽस्माकं स्वस्ति कल्याणं धेहि धारय अयथाक्रमं एकदैवेत्यर्थः, कल्याणानि किं भूतानि विश्वानि सकलानि दिवि पृथिव्यां च यानि कल्याणानि तानि सर्वाणीत्यर्थः किं च यत् अस्यां महि मह्यां दिवि स्वर्गे जातमुत्पन्नं प्रशस्तं श्लक्ष्णं द्रविणं धनं तत् अस्मासु धेहि किं भूतं चित्रं नानाविधं गोहिरण्यादि ॥ ५६ ॥

सुगं नु पन्थां प्रदिशन्नऽएहि ज्योतिष्मध्ये ह्यज-
रन्नऽआयुः ॥ अपैतु मृत्युरमृतं मऽआगाद्वै-
वस्वतो नोऽअभयं कृणोतु स्वाहा ॥ ५७ ॥

ज्योतिषां मध्येसारभूत हे अग्ने नः अस्माकं पन्थां पन्थानं प्रदिशन् उपदिशन् एहि आगच्छ पन्थानं किं भूतं सुगं सुखेनगम्यतइतिसुगः नो अस्माकं आयुर्जीवनं अजरत् जरारोगं अप्रापयन् किं च त्वय्यागते नो अस्माकं मृत्युरपैतु अपगच्छतु तथा अमृतं मोक्षः मे मम आगात् आगच्छतु यथा वैवस्वतः यमः नोऽस्माकं अभयं कृणोतु आशंसावाक्यार्थः ॥ ५७ ॥

परं मृत्योऽअनु परेहि पन्थां यस्तेऽ अन्यऽइ-
तरो देवयानात् ॥ चक्षुष्मते शृण्वते ते
ब्रवीमि मानः प्रजाꣳ रीरिषो मोत वी-
रान्त् स्वाहा ॥ ५८ ॥

हे मृत्यो परं पन्थां उत्कृष्टं पन्थानं अनुपगच्छ ते तव यः अन्यः हिंसात्मकः हिंसातोऽन्यः लोको हिंसात्मकइत्यर्थः तं पन्थानं परेहि पराहृत्य गच्छ पन्थाः किं भूतः देवयानात् इतरः उत्कृष्टः अनुदेवायानात् उत्कृष्टः अन्येन केनापि देवेन नायमनुगतः पन्थाइत्यर्थः किं च ते तव एतदेव ब्रवीमि ते किं भूताय चक्षुष्मते सकलव्यवहारं दृष्टवते शृण्वते सकलव्यवहारंश्रुतवते किं ब्रवीमि नोऽस्माकं प्रजां रीरिषः मा हिंसीः अपि च वीरान् पुत्रान् मा रीरिषः मा

मारय अनयाऽऽहुत्या तुष्टस्त्वं रक्षां कुर्व्वित्यर्थः, रीरिषदिति रिषहिंसायामित्यस्य धातोः तस्य प्रथमपुरुषैकवचने चङि माङ्योगादडागमो न भवति, वीरशब्देन पुत्रोऽभिधीयते इत्यत्र पुत्रो वै वीर इति श्रुतिप्रमाणम् ॥ ५८ ॥

अर्यमणं देवं कन्याऽग्निमयक्षत ॥ स नोऽअर्यमा देवः प्रेतो मुञ्चतु मा पतेः स्वाहा ॥५९॥

इयं कन्या अर्यमणं देवं सूर्यं अयक्षत पूजयति किं भूतं देवं अग्निं अग्निस्वरूपं किमर्थं पूजयति अर्यमा देवः इतः पतेः पत्युः सकाशात् मा मां नो मुञ्चतु नो प्रमोचयतु मत्तः पतिवियोगः कदाचिदपि नो भवत्वित्यर्थः ॥ ५९ ॥

इयं नार्य्युपब्रूते लाजानावपन्तिका ॥ आयुष्मानस्तु मे पतिरेधन्तां ज्ञातयो मम स्वाहा ॥६०॥

इयं नारी उपब्रूते वदति किं कुर्वती लाजान् आवपन्तिका आवपन्ती प्रक्षिपन्ती किं ब्रूते मम पतिरायुष्मानस्तु दीर्घायुर्भवतु तथा मम ज्ञातयः एधन्तां वृद्धियुक्ता भवन्त्विति एधन्तामिति छान्दसं ह्रस्वत्वम् ॥ ६० ॥

इमाँल्लाजानावपाम्यग्नौ समृद्धिकरणं तव ॥
मम तुभ्य च संवननं तदग्निरनुमन्यतामियꣳ स्वाहा ॥ ६१ ॥

हे पते अहं लाजानग्नावावपामि प्रक्षिपामि किं भूतान् ला-

जान् तव पत्युः समृद्धिकरणं समृद्धिकरान् समृध्यर्थमित्यर्थः, अपि च मम तुभ्यं च यत्तव च सम्बननं वशीकरण तत् अग्निः अनुमन्यतां, अनुमोदनं कुरुत इत्येतदर्थं, तुभ्येति षष्ठ्यर्थे चतुर्थी "सुपां सुलुगादिना विभक्तिलोपः ॥ ६१ ॥

गृभ्णामि ते सौभगत्वाय हस्तं मया पत्या
जरदष्टिर्यथासः ॥ भगोऽअर्यमा सविता पुरन्धि
र्मह्यं त्वाऽदुर्गार्हपत्याय देवाः ॥ ६२ ॥
अमोऽहमस्मि सा त्वꣳ सा त्वमस्य मोऽअहम् ॥
सामाहमस्मि ऋक्त्वं द्यौरहं पृथिवी त्वम् ॥ ६३ ॥
तावेहि विवहावहै सहरेतो दधावहै ॥ प्रजां
प्रजनयावहै पुत्रान् विन्द्यावहै बहून् ॥ ६५ ॥
ते सन्तु जरदष्टयः संप्रियौ रोचिष्णू सुमनस्य
मानौ ॥ पश्येम शरदः शतं जीवेम शरदः
शतꣳ शृणुयाम शरशदः शतम् ॥ ६५ ॥

तव हस्तं गृह्णामि किमर्थं सौभगत्वाय सौभाग्याय यथा च मया पत्या सह जरदष्टिः आस वृद्धाभवतीत्यर्थः जरदं वार्द्धकमश्नुते व्याप्नोतीति जरदष्टिः, हस्तग्रहणे किमर्थं तवाधिकारइत्याकांक्षायामाह भगइत्यादि, त्वा त्वां देवाः मह्यं अदुः दत्तवन्तः ते के देवा भगः अर्यमा सविता च किं भूतां त्वां पुरन्धिः पुरन्ध्री गार्हस्थाधिकारिणी किमर्थं अदुः गार्हपत्याय गृहस्वामिनीत्वाय किं

भूतोऽहं अमोहमस्मि न वर्त्तते मा लक्ष्मीरस्येति अमः तादृशोऽहं तादृशं त्वां च मां लक्ष्मीः तथा च त्वया लक्ष्म्या विना शून्योऽहं त्वं मम लक्ष्मीर्भवेति भावः, मा त्वमस्यमोहमिति पुनरभिधानमादरातिशयार्थं तथाऽहं साम अस्मि सामवेदोऽस्मि ऋक्त्वं ऋग्वेदस्त्वं अहं द्यौः स्वर्गः त्वं पृथिवी तथा च उभावपि योग्यावित्यभिप्रायः तथा च एहि अभिमुखी भव तौ आवां विवहावहै विवाहं करवाव तथा सति रेतं शुक्रं सह दधावहै धारयाम प्रजां सन्तन्तिं प्रजनयावहै उत्पादयाव बहूनपुत्रान् विन्दावहै प्राप्नुवाव ते च पुत्राः जरदष्टयः सन्तु दीर्घायुषः सन्तु किं च आवां शरदः शतं पश्येम जीवेम शरदः शतं शृणुयाम शरदः शतं आवां किं भूतौ संप्रियौ अन्योन्यानुरक्तौ रोचिष्णू दीप्तियुक्तौ, अत्र 'हग्रहोर्भश्छन्दसीति" हकारस्य भकारः ६२।६३।६४। ॥ ६५ ॥

आरोहेममश्मानमश्मेव त्वᳬ स्थिरा भव ॥
अभितिष्ठ पृतन्यतो ऽअवबाधस्व पृतनायतः ॥६६॥

हे कन्यके त्वं इमं अश्मानमारोह आक्रम किमर्थं अनेनारोहणेन त्वं स्थिरा भव कइव अश्मेव किं च पृतन्यतः त्वत्प्रतिपक्षतया आत्मनः पृतनां सेनामिच्छतः पुरुषान् अभितिष्ठाऽऽक्रम किं च पृतनाया सह आयत आगच्छत तादृशानेव अवबाधस्व खण्डय पृतनायतः इतिलोहितादिगणे पठितः पृतन्यतइति च । ६६ ॥

सरस्वति प्रेदमव सुभगे व्वाजिनी वति ॥ यां त्वा व्विश्वस्य भूतस्य प्रजायामस्याग्रतः ॥६७॥

यस्यां भूतꣳ समभवद्यस्यांविश्वमिदं जगत् ॥ तामद्य गाथां गास्यामि या स्त्रीणामुत्तमं यशः ॥ ६८ ॥

हे सरस्वति या त्वं प्रगायामि उत्कीर्त्तयामि सा त्वमिदं विवाहकर्म अव प्र अव प्रकर्षेण पालय सरस्वति किं भूते वाजिनीवति वाजिनी घोटिका तद्वती घोटिका यथा शीघ्रं गच्छति तथा त्वमपि कीर्त्ति रूपा शीघ्रं गच्छसीत्याकांक्षायामाह विश्वस्य अस्य सर्वस्य भूतस्य प्राणिजातस्याग्रतः कीदृशी या यस्यां सरस्वत्यां भूतं पृथिव्यप्तेजो वायवाकाशात्मकं समभवत्सम्यक्अभवत तथा तस्यामिदं विश्वं जगत् तां गाथां गाथात्मिकां सरस्वतीमिदानीं गास्यामि कीदृशी गाथां या गाथा स्त्रीणामुत्तमं उत्कृष्टं यशः एवं सरस्वतीं स्तुत्वा सा ममेति विवाहकर्मप्रमादकृताशुद्धमन्त्रपाठतः पालयत्विति वाक्यार्थः, प्रगायामीति गैशब्दे णिः विगास्यामीति वर्त्तमाने लट् । ६७ । ६८ ॥

तुभ्यमग्रे पर्य्यवहन्त्सूर्यांव्वहतु ना सह ॥ पुनः पतिभ्यो जायां दाग्ने प्रजया सह ॥ ६६ ॥

हे अग्ने अग्रे प्रथमं सोमादिः एतां कन्यां सूर्यां सूर्यमत्कान्तिशालिनीं तुभ्यं त्वदर्थं पर्यवहन् पर्यवहत् विवाहितवानित्यर्थः, एतां त्वया सह पुनर्ना मनुष्यो वहतु विवाहयतु यतस्ततश्च पतिभ्यः मनुष्यः यतएतां जायां प्रजया सन्तत्या सह दाः देहीति अयं वाक्यार्थः, हे अग्ने असौ प्रथमं त्वया विवाहितां तवैव जायां इदानीं सन्तत्या सह एनां जायां मनुष्याय पत्ये देहीति मह्यमिति यावत्, दा इति लोट सिप् ॥ ६६ ॥

एकमिषे विष्णुस्त्वा नयतु ॥ द्वे ऊर्ज्जे विष्णुस्त्वा नयतु ॥ त्रीणि रायस्पोषाय विष्णुस्त्वा नयतु चत्वारि मायो भवाय विष्णुस्त्वा नयतु ॥ पञ्च पशुभ्यो विष्णुस्त्वा नयतु ॥ षट्ऋतुभ्यो विष्णुस्त्वा नयतु ॥ सखे सप्तपदा भव सा मामनुव्रता भव विष्णुस्त्वा नयतु ॥७०॥

हे सखे पत्नि त्वां एकं पदं विष्णुर्नयतु प्रापयतु. इषे अन्नाय, ऊर्ज्जे बलाय, रायस्पोषाय धनपुष्ट्यै, मायः सुखं तस्य भवः उत्पत्तिः पश्वादिभ्यः तत्सुखाय. सखे इह मित्रमिव सा त्वं सप्तपदा भूरादि सप्तलोकप्रख्याताभव मां अनुवर्त्तिनीभवेति वाक्यार्थः ॥ ७० ॥

आपः शिवाः शिवतमाः शान्ताः
शान्ततमास्तास्ते कृण्वन्तु भेषजम् ॥ ७१ ॥

या आपः शिवाः कल्याण्यः शिवतमाः अतिशयेन कल्याण्यः शांताः अनुपद्रवाः अनुपद्रवकारिण्यः अतिशयेन शांततमास्ता आपस्ते तव भेषजं रोगनाशकं कृण्वन्तु कुर्वन्तु कृण्वन्त्विति कृहिं साकरणयोश्चेत्यस्माद्धातोः, आपो हिष्ठेत्यादिव्याख्यातम् ॥ ७१ ॥

मम व्रते ते हृदयं दधामि मम चित्तमनुचित्तं ते ऽअस्तु ॥ मम वाचमेकमना जुषस्व प्रजापतिष्ट्वा नियुनक्तु मह्यम् ॥ ७२ ॥

हे कन्ये ते तव हृदयं मम व्रते निश्चये दधामि अर्पयामि मद्व्रतं कारयामीत्यर्थः तथा सति तव चित्तं हृदयं मम चित्त

मन्वस्तु मम चित्तानुकूलं भवतु तथा मम वाचं वाक्यं एकमनाः संतो जुषस्व सेवस्व मदीयवचनकारिणी भवेत्यर्थः, तथा प्रजापति- र्ब्रह्मा त्वां मह्यं नियुनक्तु मह्यं नियोजयतु । ७२ ।

सुमङ्गलीरियं वधूरिमाꣳ समेत पश्यत ॥

सौभाग्यमस्यै दत्वा याथास्तं विपरेतन ॥७३॥

हे सख्यः विवाहदेवताः इयं वधूः सुमंगलीः शोभनमङ्गलयुक्ता इत्थं भूतामिमां समेत संगच्छत इमां सङ्गम्य दृष्ट्वा अस्यै सौभाग्यं च दत्वा स्वस्थानं गच्छत न विपरेत नाविमुखतया परा इत अप- गच्छत पुनरपि पुत्रादिमङ्गलमाशास्य पुनरागमनाय व्रजतेति वाक्यार्थः अत्र दत्वा इति क्वायमिति क्वास्थाने यक्, विपरेतनेति इणगती विपरापूर्वं मध्यमपुरुषैकवचने तनप् । ७३ ।

इह गावो निषीदन्त्विहाश्वा ऽइहपूरुषाः ॥ इहो सहस्रदक्षिणो यज्ञऽइह पूषा निषीदन्तु ॥७४॥

इह चर्मणित्वं उपविश त्वया सह गावः निषीदन्तु इह अश्वाः पुरुषाः परिजनमनुष्या उपविशन्तु उशब्दोऽप्यर्थः अपि इह सहस्र- दक्षिणः यज्ञो निषीदतु तथा पूषा पुष्टिकारी आदित्यः निषीदतु तथाचैतैः सह इह बलीवर्दचर्मणि उपविश एतत्सहवासेन तव क- ल्याणमस्त्विति वाक्यार्थः । ७४ ।

ध्रुवमसि ध्रुवं त्वा पश्यामि ध्रुवे धिपोष्ये मयि मह्यं त्वादात् ॥ बृहस्पतिर्मया पत्या प्रजावती संजीव शरदः शतम् ॥ ७५ ॥

हे वधूस्त्वं ध्रुवमसि अविनाशिनी तिष्ठसि त्वा त्वां ध्रुवं पश्यामि किमर्थं त्वं मयि ध्रुवा शाश्वती सती पोष्या पोषणीया एधि भव इत्येतदर्थं किं च बृहस्पतिस्त्वा त्वां मह्यं अदात् दत्तवान् तथा सति त्वं प्रजावती पुत्रादिसहिता पत्या सह शरदः शतं शतवर्षाणि जीव त्वं मयि शाश्वतो भवेत्येतदर्थं पश्यामीत्यन्तर्भावितणिच, ध्रुवमिति स्त्रीलिङ्गत्वे प्राप्ते नपुंसकलिङ्गत्वं छान्दसम् । ७५ ।

इति विवाहमन्त्रव्याख्यानम् ।

---

अथ चतुर्थीकर्ममन्त्रव्याख्यानम् ।

अग्ने प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि
ब्राह्मणस्त्वा नाथकामऽउपधावामि यास्यै
पतिघ्नी तनूस्तामस्यै नाशय स्वाहा ॥ १ ॥

हे अग्ने प्रायश्चित्ते सकलदोषापहरणस्वरूप त्वं देवानामिन्द्रादीनां प्रायश्चित्तिरसि दोषापहर्त्ता भवसि अतः कारणात् यत्त्वां उपधावामि उपसर्पामि अहं किं भूतः नाथकाम. याञ्चाकामः याञ्चार्थमुपसर्पामि इत्यर्थः, का याञ्चा अस्यै अस्याः कन्यकायाः या तनूः पतिघ्नीः यदङ्गं पतिहिंसकं अस्याः तां तनूं नाशय अपाकुरु तदलक्षणमपाकुर्वित्यर्थः, हे अग्ने यतस्त्वं देवानामपि दोषापहर्त्ता अतो मदुपसर्पितः सन् अस्यास्तदलक्षणं नाशयेत्यतं, अस्यै इति षष्ठ्यर्थे चतुर्थी ॥ १ ॥

वायो प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि
ब्राह्मणस्त्वा नाथकामऽउपधावामि यास्यै
प्रजाघ्नी तनूस्तामस्यै नाशय स्वाहा ॥ २ ॥

हे वायो अस्याः या प्रजाघ्नी सन्तानविरोधिनी तनूः, अन्यत्समानम् ॥ २ ॥

सूर्य प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि
ब्राह्मणस्त्वा नाथकामऽउपधावामि याऽस्यै
पशुघ्नी तनूस्तामस्यै नाशय स्वाहा ॥ ३ ॥

हे सूर्य अस्याः या पशुघ्नी गवादिनाशनी तनूः, अन्यत्समानम् ॥ ३ ॥

चन्द्रप्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि
ब्राह्मणस्त्वा नाथकामऽउपधावामि याऽस्यै
गृहघ्नी तनूस्तामस्यै नाशय स्वाहा ॥ ४ ॥

हे चन्द्र अस्याः या गृहघ्नी गार्हस्थ्यविरोधिनी तनूरन्यत्पूर्ववत् ॥ ४ ॥

गन्धर्वप्रायश्चित्ते त्वन्देवानां प्रायश्चित्तिरसि
ब्राह्मणस्त्वा नाथकामऽउपधावामि याऽस्यै
यशोघ्नीं तनूस्तामस्यै नाशय स्वाहा ॥ ५ ॥

हे गन्धर्व गोः किरणस्य धारक प्रकाशकारिकाया अस्याः यशोघ्नी यशोनाशनी तनूरन्यत्पूर्ववत् ॥ ५ ॥

या ते पतिघ्नी प्रजाघ्नी पशुघ्नी गृहघ्नी
यशोघ्नी निन्दिता तनूर्जारघ्नीं ततऽएनां
करोमि सा जीर्य त्वं मया सह ॥ ६ ॥

हे कन्यके असौ या तव निन्दिता दोषावहा तनूः तां एनां तनूनां जारघ्नी जारउपपतिः तत् घातिनीं करोमि सा का निन्दिता तनूः या पतिघ्नी प्रजाघ्नी पशुघ्नी गृहघ्नी यशोघ्नी एतच्च व्याकृतमेव अनेन चाभिषेककर्मणा सा त्वं मया सह जीर्यं जरां प्राप्नुहि दीर्घायुर्भवेत्यर्थः ॥ ६ ॥

प्राणैस्ते प्राणान्सन्दधामि ॥ ७ ॥

हे कन्यके तव प्राणान्प्राणैरस्मदीयैः सन्दधामि संयोजयामि॥७॥

अस्थिभिस्तेऽ अस्थीनि मांसैर्मांसानि
सन्दधामि त्वचा ते त्वचᳬ सन्दधामि ॥ ८ ॥

अनेन स्थालीपाकप्राशनेन कर्मणा मया सह तव एकप्राणत्वै कास्थित्वैकमांसत्वैकचर्मत्वानि करोमीति वाक्यार्थः ॥ ८ ॥

इति चतुर्थीमन्त्रव्याख्या।

अथ गर्भाधानमन्त्रव्याख्या।

ओंयत्ते सुसीमे हृदयं दिवि चन्द्रमसि श्रितम् ॥
वेदाहं तन्मां तद् विद्यात् ॥ पश्येम शरदः शतं
जीवेम शरदः शतᳬ शृणुयाम शरदः शतम् ॥ १ ॥

हे सुसीमे शोभना सीमा अवयवसन्धिर्यस्याः सा सुसीमा हे शोभनावयवसन्धे ते तव हृदयं वेद जानामि किं भूतं हृदयं दिवि आकाशे च चन्द्रमसि श्रितं स्थितम् प्रथमतो हि स्त्रीणां चन्द्रः स्वामीति नियमः पूर्वं स्त्रियः सुरैर्भुक्ताः सोमगन्धर्ववह्निभिरिति मतस्तदाहृतन्ते चित्तमित्यभिप्रायः इदानीं तद्धृदयं मां विद्यात्

पतिस्त्वेन जानातु किञ्च पश्येम शरदः शतं आवां शतं वर्षाणि पश्याव: एवं जीवेम शरदः शतं शृणुयाम शरदः शतं इयन्तं समयं चन्द्रस्तवपतिरासीत् देवता तव तस्मिन्नाश्रितम् इदानीमहं तव पतिरिति तव हृदयं जानातु आवामविकलेन्द्रियौ शतं वर्षाणि जीवाव इत्याशंसावाक्यार्थः पश्येम जीवेम शृणुयाम इति तिङां तिङो भवन्तीति उत्तमपुरुषद्विवचने बहुवचनम ॥ १ ॥

ॐ इयमोषधी त्रायमाणा सहमाना
सरस्वती ॥ अस्याऽ अहं बृहत्याः पुत्रः
पितुरिव नाम जग्रभत् ॥ २ ॥

इयं बृहती ओषधी व्याधनाशकरी किं भूता त्रायमाणा रक्षाकरी पुनः किं भूता सहमाना उत्पन्नं दोषमाकर्षणकरी पुनः किं भूता सरस्वती वाक् प्रसादहेतुः अस्या बृहत्या कण्टकारिकायाः पुत्रः नाम जग्रभत प्रकाशत्वं गृह्णातु किं भूतं नाम पितृसदृशमित्यर्थः अत्र पूर्वार्द्धेन बृहतीस्तुतिः उत्तरार्द्धेन अस्याः पुत्रप्रकाशत्वं लभतां इत्याशंसावाक्यार्थः, जग्रभदिति ग्रहउपादानइत्यस्माद्धातोर्हृग्रहोर्भश्छन्दसीति हकारस्य भकारः इति गर्भाधानम् ॥ २ ॥

अथ पुंसवनम् ।

ॐ हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः,
पतिरेकऽआसीत् ॥ सदाधार पृथिवीं द्यामुतेमां
कस्मै देवाय हविषा विधेम ॥ ३ ॥

हिरण्यगर्भः हिरण्यगर्भाख्यः पुरुषः समवर्त्तत समभवत् अग्रे

प्रथमं यो हिरण्यगर्भो जातो जातमात्रोऽभूत्तस्य प्राणिजातस्य एकोऽद्वितीयः पतिरासीत् स्वामी बभूवेत्यर्थः, एवं भूतः स पृथिवीं दाधार धृतवान् न केवलं पृथिवीं उत इमां द्यां अन्तरिक्षं एवं भूताय कस्मै काय प्रजापतये देवाय हविषा हविर्विधेम दधु, अत्र स दाधार इति दधार इति प्राप्ते आकारश्छान्दसः, काय इति प्राप्ते स्मायादेशश्छान्दसः हविषेति द्वितीयास्थाने तृतीया अयं वाक्यार्थः, यो हिरण्यगर्भएकएव प्राणिजातस्य प्रभुः पृथिवीमन्तरिक्षञ्च धारयति तस्मै प्रजापतिमूर्त्तये हविरपि दीयते इति प्रजापतेः स्तुतिः अदृश्य इति व्याख्यातम् ॥ ३ ॥

ओं सुपर्णोऽसि गरुत्माँ स्त्रिवृत्ते शिरो गायत्रं चक्षुर्बृहद्रथन्तरे पक्षौ ॥ स्तोम आत्मा छन्दाᳪ स्यङ्गानि यजूᳪषि नाम ॥ साम ते तनूर्वामदेव्यं यज्ञायज्ञियं पुच्छं धिष्ण्याः शफाः ॥ सुपर्णोऽसि गरुत्मान् दिवं गच्छ स्वः पत ॥ ४ ॥

सुपर्ण. शोभनपर्णः शोभनपक्षः गरुत्मान् दूरगत्यादिगुणयोगेन प्रशस्तपक्षवान् त्रिवृत् स्तोमः ते तव शिरो मस्तकं गायत्रं साम ते चक्षुः बृहद्रथन्तरे सामनी ते पक्षौ स्तोमः स्तोमाख्यः पञ्चविंशति सामानि ते आत्मा स्वरूपं छन्दांसि अनुष्टुबादीनि ते अङ्गानि यजूंषि यजुर्वेदः ते नाम सञ्ज्ञा साम ते तनूः शरीरं कतमं वाम

देव्यं यज्ञायज्ञियं साम ते पुच्छं लाङ्गूलम्धिष्णया अग्नयः ते शफाः नखाः यतस्त्वं सुपर्णोऽसि गरुत्मांश्च अतः दिवं आकाशं गच्छ यामि स्व. स्वर्गलोकं पत याहि अयं वाक्यार्थः तनूर्वामदेव्यं यज्ञायज्ञियं सुवर्णत्वादिगरुडधर्म्ममारोप्य वेदमयस्त्वमिति अग्निः स्तूयते पुंसवने अग्निजलयोः कार्यकारणभेदाश्रयणेनाग्निस्तुत्या जलमेव स्तुतं गर्भ-वीर्यवत्त्वं करोति, इति पुंसवनम् ॥ ४ ॥

अथ सीमन्तोन्नयनम् ।

ओं अयाश्चाग्नेऽस्यनभिशस्तिपाश्च
सत्त्यमित्त्वया ऽ असि ॥ अयानो यज्ञं
वहास्ययानो धेहि भेषजम् ॥ ५ ॥

हे अग्ने त्वं अयाश्च असि प्राणिनां शुभावहो विधिरप्यसि अपरं अनभिशस्तिपाश्च असि अविद्यमाना अभिशस्तिर्याञ्चा यस्य पुरुषस्य सोऽनभिशस्ति तमपि पासि रक्षसि इति अनभिशस्तिपाश्च त्वं अयमर्थः यस्त्वां रक्षणार्थं न याचते तस्यापि त्वं माहात्म्याद् रक्षको भवसीति तदित्थं भूतस्त्वं अयाः आगच्छ आगत्य नोऽस्माकं यज्ञं वह यद्धविरितद्धुतं तद्देवान् प्रापय किञ्च त्वं सत्यमित्वं सत्यमेव अया असि ज्ञाता असि जगत्संसारात् निस्तारोपायं जानासीत्यर्थः अतः कारणादपि त्वं अयाः आगच्छ आगत्य च नोऽस्माकं भेषजं धेहि अस्माकं निस्तारोपायमौषधं परिकल्पय यद्यपि शुभावह-वाची अयश्शब्दोऽकारान्तस्तथापि छान्दसः सकारान्तः, सत्यमि-दिति इत्शब्दोऽयमव्ययमवधारणार्थ,ः अयानो यज्ञं वहास्ययानो

चेहि भेषजमित्यत्र अया अया इति क्रियापदद्वयमत्यन्तार्थिकत्व द्योतनार्थं, अतायाइति इण्गतावित्यस्माल्लिङ् मध्यमपुरुषैकवचनं सिप् इतश्च लोपः परस्मैपदेष्विति इकारलोपः धातोर्गुणः लेटोऽडा-टावित्याडागमः आङ्पूर्वः तस्याकारेण एकारादेशे सति वर्णव्य-त्ययाद् ह्रस्वत्वं, अया इति सर्वे गत्यर्था ज्ञानार्था इति कृत्वा एति जानातीति असुन्प्रत्ययेन रूपम् ॥ ५ ॥

ॐ भूर्विनयामि ॥ १ ॥

भूर्लोकं विनयामि पृथक्करोमि ॥ १ ॥

ॐ भुवर्विनयामि ॥ २ ॥

भुवर्लोकं अन्तरिक्षं विनयामि पृथक्करोमि ॥ २ ॥

ॐ स्वर्विनयामि ॥ ३ ॥

स्वर्लोकं पृथक्करोमि, पुंसवने हिरण्यगर्भादिद्वयमन्त्रेण नस्यं दत्वा त्रैलोक्यपतिः त्रैलोक्याधारः पुरुषोत्तमो गर्भे आहितः एता-वता गर्भिणीये त्रैलोक्यमपि वर्त्तन्ते तथा सति भूरादिलोकत्रयम-संकीर्णः भवत्वेभिः त्रिभिः मंत्रैः केशानां पृथक्करणं क्रियते सीम-न्तोन्नयने पृथक्कृतैः केशैर्वेणीं बध्नात्यनेन मंत्रेण । ३ ॥

ॐ अयमूर्ज्जावतो वृक्षऽऊर्ज्जीव

फलिनी भव ॥ ४ ॥

हे गर्भिणि अयं वृक्षः ऊर्जावतः ऊर्जो बलं तद्वान् एतद्योगात् ऊर्जीव फलिनी फलयुक्ता तथा त्वमपि फलिनी पुत्रिणी भव अत्र प्रथमपदेन उदुम्बरस्तुतिः, द्वितीयपदेन गर्भिण्याः पुत्रिणीत्वम् प्रा

स्यति । ऊर्जीव इति सुपां सुपोभवन्तीति विभक्तिव्यत्ययेन प्रथम-वचनस्थाने द्वितीया बहुवचनम्, वीणागाथिभ्यां वाद्यमा गीयमाने यजमानः अयमेताङ्गाथां गायति ॥ ४ ॥

ओं सोमऽएव नो राजेमा मानुषीः प्रजाः ॥
अविमुक्तचक्रऽ आसीरंस्तीरे तुभ्यमसौ ॥ १ ॥

हे असौ अमुकनदि तुभ्यं तव तीरे इमा प्रजाः आसीरन् तिष्ठन्ति किं भूताः प्रजाः मानुषीः मानुष्यः ( १ ) पुनः किं भूता अविमुक्तचक्राः अविमुक्तं अवियक्तं चक्रं मण्डलं याभिः अविमुक्त-चक्राः नः अस्माकं प्रजानां सोमः राजा, राजा यथा रक्षकः पोष्टा च एवं नोऽ स्माकं सोमश्चन्द्रो रक्षकः पोष्टा च भवत्वित्याशंसावा-क्यार्थः । मानुषीरिति सुपां सुलुमिति प्रथमा बहुवचने द्वितीया बहुवचनं, तुभ्यमिति षष्ठ्यर्थे चतुर्थी, असावितिसंबोधनान्तस्थित-नदीनामोपलक्षणम् ॥ इति सीमन्तोन्नयन मंत्राः ॥१ ॥

अथ सोष्यन्तीकर्म्ममंत्राः

ओं एजतु दशमास्यो गर्भो जरायुणा सह ॥
यथा ऽयँ व्वायुरेजति यथा समुद्रऽ एजति ॥
एवायं दशमास्योऽ अस्रज्जरायुणा सह ॥ २ ॥

( १ ) यजुर्वेदभारद्वाजसूत्रभाष्ये हे गंगादिनदि तुभ्यं तव सोम-रूपायास्तीरे आसीरन् त्वामाश्रित्य स्थिताः किं भूते तीरे अविमु-क्तचक्रे अनुल्लङ्घितमार्गे, अनेन सप्तम्यन्तार्थपाठः सुबोध्यः ॥

दशमास्यः दशमासकालावच्छिन्नः यं पूर्णप्रसवकालीनइति यावत् गर्भः प्रसिद्धार्थः । एजतु कम्पतां न केवलं गर्भः जरायुणा सह जरायुर्गर्भवेष्टनं आवराइति यस्य प्रसिद्धिः यथा वायुरेजति कम्पते यथा समुद्रएजति कम्पते एवं यथायं गर्भः दशमास्यः संपूर्णकालीनः जरायुणा सह अस्रत् अधः पाती भवतु, अत्र अस्रदिति स्रंसुध्वंसुअधः पतने अस्माद्धातोराशंसायां लिङ् प्रथमपुरुषैकवचनं "छन्दस्यपि दृश्यत"इत्यडागमः आगमशासनस्यानित्यत्वाद् यासुडागमो न भवति 'किदाशिषीति' लिङः कित्वाद"निदिता" मिति सूत्रेणानुनासिकलोप,: "स्कोः संयोगाद्योरन्तेचेति" सकारलोपः इति सोष्यन्तीकर्ममन्त्रः ॥ २ ॥

अवैतु पृश्निः शेवलꣳ शुने जराय्व् वत्तवेनैव
माꣳ सेन पीवरि न कस्मिंश्च नायतनमव
वजरायु पद्यताम् ॥ १ ॥

जरायु अवैतु किमिव पृश्निः शेवलं एतयोरुपादानन्दृष्टान्तार्थम् एतेनैतदुक्तं भवति यथा पृश्निः पङ्क्ती शेवलं प्रसिद्धमेवमनेन क्वचिदपि असंलग्नं जलोपरि स्थितं सद्बुद्बुदभावादिप्रेरणेनाप्ययं गच्छति यथा जरायुः सुखेनापगच्छतु कथं कारणं शुने अत्तवे भक्षणाय शुनोदनाय यथा न भवतीत्यर्थः, किं भूतं जरायु मांसेन पोवरि पुष्टं किं च जरायु कस्मिंस्च अवपद्यतां कुत्राप्यवगवे अपस्नं विलग्नं न भवतु किं भूतं आयतनं महत् उदरे असंलग्न' जरायु सुखेन पतत्वितिवाक्यार्थः, अत्र शुने इति षष्ठ्यर्थे चतुर्थी, अत्तवे

अङ्गन्वये इत्यत्र 'तुमर्थे सेसे''नित्यादिना सूत्रेण तवैङ् प्रत्यये कृते रूपम्, पीवरीति लिङ्गव्यत्ययेन स्त्रीत्वम्। इत्यवरावपतनकर्म-मन्त्रव्याख्या ॥ १ ॥

अथ जातकर्म्ममन्त्रव्याख्या।

ओं भूस्त्वयि दधामि ॥ १ ॥

भूर्लोकं त्वयि दधामि ॥ १ ॥

ओं भुवस्त्वयि दधामि ॥ २ ॥

भुवर्लोकं अन्तरिक्षं त्वयि दधामि अर्पयामि ॥ २ ॥

ओं स्वस्त्वयिदधामि ॥ ३ ॥

स्वर्लोकन्ते दधामि ॥ ३ ॥

ओं भूर्भुवः स्वः सर्वं त्वयिदधामि ॥ ४ ॥

भूर्भुवः स्वः सर्वं त्वयि एतल्लोकत्रयोपलक्षितमेतदाश्रितं सर्वं प्रमेयजातन्त्वयि दधामि दधामीति सर्वत्रैव समानम्। त्रैलोक्यगतप्रमेयजातधारणेन तव मेधा भवत्विति वाक्यार्थः ॥ ४ ॥

अग्निरायुष्मान्त् सवनस्पतिभिरायुष्माँस्तेन त्वा ऽऽयुषा ऽऽयुष्मन्तं करोमि, सोमऽआयुष्मान्त् सौषधीभिरायुष्मांस्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि, ब्रह्मायुष्मत्तद्ब्राह्मणैरायुष्मत्तेन त्वा ऽऽयुषा ऽऽयुष्मन्तं करोमि, देवाऽआयुष्मन्तस्तेऽमृतेनायुष्मन्तस्तेन त्वा ऽऽयुषाऽऽयुष्मन्तं

करोमि, ओषधयऽआयुष्मन्तस्ते
व्रतैरायुष्मन्तस्तेन त्वा ऽऽयुषाऽऽयुष्मन्तं
करोमि, पितरऽ आयुष्मन्तस्ते स्वधाभि-
रायुष्मष्मन्तस्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि,
यज्ञऽआयुष्मान्त् सदक्षिणाभिरायुष्माँस्तेन
त्वाऽऽयुषाऽऽयुष्मन्तं करोमि, समुद्रऽआ-
युष्मान्त् संस्रवन्तीभिरायुष्माँस्तेन
त्वाऽऽयुषाऽऽयुष्मन्तं करोमि ॥

हे कुमार यो यमग्निरायुष्मान् चिरस्थायी स वनस्पतिभिर्वृ-क्षैरिन्धनभूतैरत अग्नेराश्रयत्वमुपगतैर्वायुष्मान् तेनाग्निसंबन्धिना आयुषा त्वा त्वां आयुष्मन्तं करोति, सोमश्चन्द्रः ओषधीभिर्व्रीह्यादिभिरमावास्यायाङ्क्षीणश्चन्द्रमा ओषधीषु प्रविष्टो भवति ततः शुक्लपक्षे ताभिराप्याय्यमानक्रमेण वृद्धिमासादयन् आयुष्मान् भवति, ब्राह्मणैः प्रसिद्धैः ब्राह्मणैर्हि शिष्योपाध्यायक्रमेण धार्य्यमाणो वेद आयुष्मान् भवति, देवा अमृतैरिति च प्रसिद्धार्थं देवानां हि अमृतं प्राप्यामरत्वं, ऋषयोः, मरीच्यादयः, व्रतैश्चान्द्रायणप्रभृतिभिः ऋषीणां हि तपसैव दीर्घायुष्ट्वं, पितरः अग्निष्वात्तादयः स्वधाभिः पितॄणामन्नैः, यज्ञैः सदक्षिणाभिरिति च प्रसिद्धार्थं, समुद्रः प्रसिद्धः स्रवन्तीभिर्नदीभिः, अपरञ्च सर्वं समानमेव, वनस्पतिभिरिति "अन्येषामपि दृश्यते" इति दीर्घत्वम्, त्र्यायुषमिति व्याख्यातम् ।

ओं दिवस्परि प्रथमं जज्ञे अग्निरस्मद्द्वितीयं
परि जातवेदाः ॥ तृतीयमप्सु नृमणाऽ
अजस्रमिन्धानऽएनं जरते स्वाधीः ॥ १ ॥

अग्निर्द्दिवस्परि आकाशमधिकृत्य जज्ञे जातवान् जातवेदाः अग्निरेव अस्मत्परि अस्मत्सरणं पुरुषरूपं विष्णुमधिकृत्य द्वितीयं जज्ञे अप्सु जलेषु तृतीयं जज्ञे नृमणाः नृषु मनुष्येषु मनाश्रस्येति नृमणाः प्रजापतिः एवं अग्निं इन्धानः पुरोडाशादिना दीपयन् अजस्रं पुनः जरते जरयति किं भूतः प्रजापतिः स्वाधीः सुशोभनं आहिताधीर्बुद्धिर्यस्य स स्वाधीः स्वायत्तचित्तः प्रजापतिः जरापर्यन्तं परिचरतीत्यर्थः ॥ १ ॥

ओं विद्मा तेऽ अग्ने त्रेधा त्रयाणि विद्मा ते
धाम विभृता पुरुत्रा ॥ विद्मा ते नाम परमं
गुहा यद्विद्म। तमुत्सं यतऽ आजगन्थ ॥ २ ॥

हे अग्ने ते तव त्रेधा त्रिः प्रकारं त्रयाणि त्रिसङ्ख्याकानि आदित्याग्निवडवानलरूपाणि अग्निवायुसूर्य्याख्यानि च विद्म जानोमः किं च ते धाम स्थानानि आहवनीयगार्हपत्यदक्षिणाग्निरूपाणि विद्मः किं भूतानि विभृतानि विशेषेण धृतानि धाम धामानि आधारभूतानि अपि किं भूतानि पुरुत्रा पुरुषु बहुप्रदेशेषु त्रायन्ते इति पुरुत्रा तानि पुरुत्राणि जगद्रक्षाकारकाणि इत्यर्थः,

इति च ते नाम विद्म किं भूतं परममुत्तमं न केवलमुत्तममपि यद् गुहायामवस्थितं गुह्यमिति अपि च अतः सकाशात् आजगन्थ आगतोऽसि त्वमुत्सं उत्स्यन्दनं जलरूपं स्थानं त्वत्संश्रयजनकं वयं विद्म:, अत्र विद्माइतिआकारश्छान्दसः, "द्व्यचोऽतस्तिङ" इतिसूत्रेण धामइति बहुवचने एकवचन, विभृतानि पुरुत्राणि इत्यत्र नि-लोपः छान्दसः, गुहाइति सप्तम्यां प्रथमा, आजगन्थेति गम्लृगता-वित्यस्माद्धातोः लिङ् मध्यमपुरुषैकवचने लङुपदेशात् तथा इति इट्निषेधः हे अग्ने तव रूपं स्थानं नाम उत्तमं कारकाणि वयं जानीम इति वाक्यार्थः ॥ २ ॥

ओं स॒मु॒द्रे त्वा॑ नृ॒मणा॑ऽ अ॒प्स्व॒न्तर्नृ॒चक्षा॑ऽ ईधे

दि॒वो अ॑ग्न॒ऽऊध॑न् ॥ तृ॒तीये॑ त्वा॒ रज॑सि तस्थि॒

वाᳪं स॑म॒पाम॒ुपस्थे॑ महि॒षा॒ऽ अ॑वर्द्धन् ॥ ३ ॥

हे अग्ने त्वा त्वां नृमणाः प्रजापतिः ईधे दीपयाञ्चकार किं भूतन्त्वां समुद्रे अप्सु जलेषु अन्तर्मध्ये वाडवाग्नित्वेनविद्युद्रूपत्वेनावस्थितं, नृमणाः किं भूतः नृचक्षाः नृषु मनुष्येषु चक्षुरस्येति नृचक्षाः किं भूतन्त्वां दिवः स्वर्गस्य ऊधन् ऊधसि अप्सु जलस्थानीये स्थाने आदितेयस्थितं आदित्यो हि पृथिवीमतंरसं रश्मिभिरादाय पुनर्वर्षासु त्यजति एतावता अत्र स्वर्गप्रदेशे आदित्यस्तिष्ठति तत्स्थानं स्वर्गस्य ऊध इव ऊधः शब्देनाभिहितं एवं तृतीये रजसि रञ्जनात्मके तेजोमण्डले भूमिराकाशं स्वर्गइति गणनाक्रमेण तृतीयः स्वर्गो भवति तृतीये लोके अपां उपस्थे उत्सङ्गे च तस्थिवां संस्थितं

त्वां मह्मिषाः प्राणवायवः अवर्द्धयन् वर्धयां चक्रुः, अत्र जधन् इति उधः शब्दात्सप्तम्येकवचनं तस्य "सुपां सुलुगिति लुग्" "व्यत्ययो बहुल" मितीकारस्य नकारः, मह्मिषाः "प्राणा वै मह्मिषा" इतिश्रुतिप्रमाणं समुद्रे वाड़वाग्नितया स्वर्गे आदित्यतया स्थितं त्वामग्निं वायवो वर्द्धयन्त्विति अग्निस्तुतिवाक्यार्थः ॥ ३ ॥

ओं अक्रन्दुदग्निस्तनयन्निव द्यौः क्षामा
रेरिहद्वीरुधः समञ्जन् ॥ सद्यो जज्ञानो
विहीमिद्धो अख्यदारोदसी भानुना
भात्यन्तः ॥ ४ ॥

अग्निः अक्रन्दत् शब्दं करोति किं च क्षामा क्षमां पृथिवीं रेरिहत् लेढि आस्वादयतीत्यर्थः रलयोरैक्य स्मरणम् लकारस्य स्थाने रेफः पठ्यते किं कुर्वन् वीरुधः ओषधी. समञ्जन् आप्नुवन् अपि च ईद्धः सन्धुक्षित. सन् व्यख्यत् विख्यापयति किं भूतः सद्यो जज्ञानः तात्कालिकजातः जायमानः हिशब्दइत्शब्दौ पादपूर्णार्थौ किं च रोदसी द्यावापृथिव्यौ अन्तर्मध्ये द्यावापृथिव्योर्मध्ये इत्यर्थः भानुना रश्मिना आभाति कइव द्यौरिव, अत्र मञ्चाः क्रोशन्तीतिवत् द्यौः शब्देन मेघउच्यते एवमुक्तं भवति यथा मेघः स्तनयन् शब्दं कुर्वन् पृथिवीं विन्दुकेन लिहति ओषधीर्व्याप्नोति भानुना विद्युद्रूपेण प्रकाशयति ॥ ४ ॥

श्रीणामुदारो धरुणो रयीणां मनीषाणां

प्रार्पणः सोमगोपाः ॥ वसुः सूनुः सहसोऽ
अप्सु राजा विभात्यग्रऽउषसामिधानः ॥ ५ ।

वसुरग्निर्विभाति प्रकाशते उषसां उषसि प्रत्यूषसमये अग्नेः प्रथमं इधानः दीप्यमानः प्रत्यूषसमय हि अग्नीनां प्रादुष्करणं क्रियते पुनः किं भूतः अग्निः श्रीणां लक्ष्मीणामुदारः आधाता रयीणां धनानामध्वरुणः धारयिता मनीषाणां मनोऽभिलषितानां प्रार्पणः प्रापयिता धनमिच्छेद्धुताशनादित्यभिप्रायमेतत् सोमगोपाः सोमं चन्द्रं गोपायति, रक्षति गुपूरक्षणे इत्यस्मात् सोमोपपदात् "सर्वधातुभ्योऽसुन्" इत्यसुन् प्रत्ययः, सहसः बलस्य सूनुः पुत्रः बलवतामेध्यमानश्चेदुत्पद्यते, अप्सु जलेषु राजा वरुणः सर्वमेव श्रीणामुदारः इत्यादि वसुरित्यस्य विशेषणम् ॥ ५ ॥

ओं विश्वस्य केतुर्भुवनस्य गर्भऽआरोदसीऽ
अपृणाज्जायमानः ॥ वीडुं चिदद्रिमभिनत्
परायन् जना यदग्निमयजन्त पञ्च ॥ ६ ॥

यत् पञ्च अग्निं पञ्च चत्वारो ब्राह्मणादयः निषादाख्यासङ्कीर्णजातिश्चेति पञ्च जना मनुष्याः अयजन्त पूजितवन्तः सोऽग्निर्विश्वस्य सर्वप्राणिजातस्य केतुः जातः सर्वस्येत्यर्थः भुवनस्य भुवनवर्त्तिनो भूतजातस्य गर्भअन्तर्वर्त्ती प्राणादिवायुवत्तया आइति उपसर्गोऽपृणादित्यनेन सम्बध्यते किं भूतो अग्निरोदसी आपृणात् द्यावापृथिव्यौ पूरितवानित्यर्थः आदित्यतया जायमानउत्पद्यमानः

किं च अद्रिं पर्वतं अभिदत् विदारितवान् किं भूतं वीडुं वीडुशब्दो-दृढार्थः चित् शब्दोऽप्यर्थे चित्तमपीत्यर्थः कुर्वन् परायन् परागच्छ-न् तत्र पर्वते अपतन्निति यावत् एतेनाग्निरेव इन्द्रइत्युक्तम्भवति० केतुरिति कितज्ञाने इत्यस्माद्धातोरौणादिक उप्रत्ययः ॥ ६ ॥

ओं उशिक् पावको ऽ अरतिः सुमेधा मर्त्ये-
ष्वग्निरमृतो निधायि ॥ इयर्त्ति धूममरुषम्
भरिभ्रदुच्छुक्रेण शोचिषा द्यामिनक्षन् ॥ ७ ॥

अग्निर्मर्त्येषु निधायि निधातः निहितः किं भूतः उशिक् कान्तः मनोहरः पावकः पवित्रताकारी अरतिः अलम्मतिः पर्य्याप्तमतिरित्यर्थः; सुमेधाः साधुप्रज्ञः अमृतः अमरणधर्म्मा यः सएवं भूतोऽग्निः सधूममण्डल उदियर्ति ऊर्ध्वं गमयति, उदिति व्यवहितसम्बन्धः; किं भूतः धूममरुषं अरोचनं रूपवदित्यर्थः किं कुर्वन् अग्निः भरिभ्रत् जगद्धारयन् अपि च शोचिषा रश्मिना द्यां आकाशं इनक्षन् व्याप्नुवन् किं भूतेन शोचिषा शुक्रेण शुक्लवर्णेन, अत्र उशिक् इति वशकान्तावित्यस्माद्धातारौणादिक उप्रत्ययः अरतिः अलं मतिरित्यस्य "व्यत्ययो बहुलमिति" वचनात् अत्र तु लमकारयोर्लोपः रलयोरैक्यस्मरणात्, भरिभ्रदिति डुभृञ् धारणे इत्यस्य "दाधर्त्तीत्यादिसूत्रेण निपातनाद्रूपम् ॥ ७ ॥

ओं ईशानो रुक्मऽउर्व्या व्यद्यौद् दुमर्षमायु-
श्श्रिये रुचानः ॥ अग्निरमृतो ऽ अभवद्वयो-

भियं॒ दे॑नं॒ द्यौर॑जनयत् सु॒रेताः॥ ८॥

अग्निर्व्यद्यौत् विद्योतते कया ऊर्म्या मत्या दीप्त्या इत्यर्थः किं भूतः दृशानः प्रत्यक्षतो दृश्यमानः रुक्मः रोचनरूपवानित्यर्थः न केवलं विद्योतते किं च यस्य अग्नेः आयुः जीवनं दुर्मर्षं दुःखेन मृष्यते खण्डयितुं शक्यते इति यावत् सोऽग्निरमृतोऽमरणधर्माऽभवत् भूतः किं कुर्वन् रुचानः हर्षयन् किमर्थं श्रिये लक्ष्म्यै लक्ष्मीं दातुमिच्छन्नित्यर्थः किं च यदेनं अपरोक्षनिर्देशे आदित्यं द्यौः प्रकाशं अजनयत् जनितवती किं भूता सुरेताः शोभनं रेतो यस्याः शोभनत्वं च रेतसः एतद्देवत्वेन विश्वस्य द्योतनकारी आदित्यो जनितः कैरजनयत् वयोभिः अन्नैः पशुपुरोडाशप्रभृतिभिः पश्चादयो हि अग्नौ हुता आदित्योदयभावं भजन्तइत्यभिप्रायः, दृशानइति दृशि धातोः कर्मणि लिट् शान "छन्दस्युभयथे"ति शानच् आर्धधातुकत्वान्नुक् न भवति, व्यद्यौदिति दिवुधातोर्विपूर्वात् विदिव्यतीति क्विप् "छन्दस्यपि दृश्यते" इत्यडागमः अदिवशब्दात् प्रथमैकवचने अट्त्वादिति वकारस्यौकारः । ८ ।

ओं यस्ते॑ऽअ॒द्य कृ॒णव॑द् भद्रशोचे पू॒प॑न्दे॑व घृ॒तव॑न्तमग्ने ॥ प्रतन्न॑य प्रत॒रं वस्यो॒ऽ अच्छा॑भिसु॒म्नं॒ देवभ॑क्तं यविष्ठ ॥ ९ ॥

हे भद्रशोचे कल्याणरश्मिदेव देवनादियुक्त अग्ने यो यो यजमानः ते तव अद्य इदानीं अपूपं पुरोडाशवत् करोति किं भूतं

घृतवन्तं घृतेनोपस्तीर्णाभिघारितं यजमानं वस्यः बलोचितं स्थानं प्रणय प्रणयसि सिलोपः छान्दसः किं भूतं वस्यं प्रतरं प्रकर्षेण तीर्यंत गम्यते प्रतरं प्रकर्षार्थश्च अग्निप्रसादेन प्राप्य तं अपि किं भूतं अच्छं निर्मलं निष्पापमित्यर्थः किं च हे यविष्ट युवतम तं यजमानं सुम्नं सुखं नय सुखाभिमुखं प्रापयेत्यर्थः किं भूतं सुखं देव भक्तं देवैः फलितम् हे अग्ने यजमानः तव पुरोडाशङ्करोति तं यजमानं देवोपभोग्यं सुखाभिमुखं कृत्वा अपूपप्रसादं प्राप्य सुखं स्वर्गं प्रापये त प्रार्थनावाक्यार्थः, अक्रणवदिति डुकृञ् करणे स्वादिः, "स्वादिभ्यःश्नुः" "इतश्च लोपः परस्मैपदेष्वि"तीति तिपइकारलोपे 'लेटोऽडाटावित्यडागमः' नुकारस्य गुणः, अवादेशः, वस्यइति वसधातो"रमावस्यदन्यतरस्या"मिति व्यवस्थितविभाषया केवलस्यापि धातोर्ण्यतारूपं विभक्तिव्यत्ययेन द्वितीयैकवचने प्रथमैकवचनं अनुस्वारलोपः छान्दसः । ९ ॥

ओं आतमभंज सौश्रवसेष्वग्नऽउक्थऽउक्थऽआभंज शस्यमाने ॥ प्रियः सूर्ये प्रियोऽअग्नाभवात्युज्जातेन भिनददुज्जनित्वैः ॥ १० ॥

हे अग्ने तं यजमानं आभज तस्य सन्निहितो भव त्वयि सन्निहिते किं स्यादित्यपेक्षायामाह यस्य यजमानस्य उक्थे उक्थे स्तोत्रे स्तोत्रे शस्यमाने सौश्रवसे सुष्ठु साधु श्रवणीये भूया भजसि आसेवने सहितो भवसीत्यर्थः असौ यजमानः सूर्ये सूर्यस्य प्रियः

उद्भवाति उत् वद्यते अग्ने अग्नाः प्रियउद्भवाति न केवलं अपि सुजातेन पुत्रेण जनित्वैः जनिष्यमाणैः पुत्रपौत्रादिभिः उदभिनदत् उद्भिनत्ति धर्मार्थकामान् यस्य पुत्रादयोऽपि धर्मकामयुक्ता भवन्तीत्यभिप्रायः, अत्र सूर्य्ये इति "सुपां सुपो भवन्ती"ति षष्ठ्येकवचने सप्तम्येकवचनं, अग्नाइति षष्ठ्येकवचने सुलुगादिवाक्येन विभक्तिलोपः वर्णव्यत्ययेन इकारस्याकारः, उद्भिनददिति भिदिरविदारणे लेट् "इतश्चलोपः" "लेटोऽडाटावित्यडागमः" जनित्वैरिति जनीप्रादुर्भाव इत्यस्मात् कृत्यार्थे तवै केन्केन्यत्वन" इति त्वन्प्रत्ययः इति त्वतोयाबहुवचनम् ॥ १० ॥

ओं त्वाम॑ग्ने यज॑माना॒ऽअनु॒ द्यून्विश्वा॒ वसु॑ दधिरे॒ वार्य्या॑णि ॥ त्वया॑ स॒ह द्रवि॑णमि॒च्छमा॑ना व्र॒जं गोम॑न्तमु॒शिजो॑ विव॑व्रुः ॥ ११ ॥

हे अग्ने त्वां यजमानाः विश्वा विश्वानि सर्वाणि गोभूहिरण्यवस्त्रादीनि सुवसूनि धनानि दधिदुग्धादीनि किम्भूतानि वार्य्याणि वरणीयानि प्रार्थनीयानि कथं यजमानाः समुद्यून् अनुदिवसान् प्रत्यहमिति यावत् किं च त्वया सह त्वया सह युक्ताः समग्रं द्रविणं यज्ञफलंमोक्षरूपं इच्छमानाः कामयमानाः व्रजं वत्सं व्रज्यते अनेनेति व्रजं किम्भूतं गोमन्तं रश्मिमन्तं आदित्यमित्यर्थः किं भूता यजमानाः उशिजः मेधाविनः ज्ञानिनः तेनैतदुक्तं भवति त्वां यजमानाः यदा धनादिकमिच्छन्ति तदा ज्ञानिनो भूता ज्ञानकर्मसमुच्चयेनादित्यत्वाद् मोक्षं प्राप्नुवन्तीति ॥ ११ ॥

पूर्वो ब्रूयात् प्राणेति व्यानेति दक्षिणोऽपाने-
त्यपरऽउदानेत्युत्तरः समानेति
पञ्चमऽउपरिष्टादवेक्षमाणो ब्रूयात् ॥ १ ॥

ततश्च ते पञ्च ब्राह्मणाः कुमारस्यानुप्राणनं कुर्वन्ति एभिः पञ्चभिर्मन्त्रैः प्राणव्यानअपानउदानसमानएतानि पञ्च सम्बोधनानि पदानि अनेन सम्बोधनेन प्राणाः पञ्च वायवः अस्यभूता अस्मिन् सम्बोधने स्थिरतरो भवेदित्यभिप्रायः ॥ १ ॥

वेद ते भूमि हृदयं दिवि चन्द्रमसि श्रितम् ॥
वेदाहं तन्मां तद्विद्यात् पश्येम शरदः शतं
जीवेम शरदः शतꣳ शृणुयाम शरदः शतम् ॥२॥

हे भूमि ते तव हृदयं वेद जानामि किं भूतं चन्द्रमसि श्रितं सम्बन्धं कुत्र दिवि आकाशे हृदयं अहं वेद तन्मां विद्यात् मामपि तज्ज्ञानादित्यर्थः, पश्येम शरदः शतमिति व्यक्तार्थं व्याख्यातञ्च गर्भाधाने ॥ २ ॥

ओं अश्मा भव परशुर्भव हिरण्यमस्रुतं भव ॥
आत्मा वै पुत्रनामासि सजीव शरदः शतम् ॥३॥

हे कुमार इति सम्बोधनमध्याहार्य्यं त्वं अश्मा भव प्रस्तरमिव दृढाङ्गो भव परशुः कुठारइव विरोधिनां छेदको भव किञ्च हिरण्यं अस्रुतं यथा सुवर्णं असुवर्णं अस्रुतं अक्षरं तथा त्वमपि भव किञ्च त्वं मम आत्माऽसि किं भूतं पुत्रनामा मदीयात्मना सह तव पुत्र-

त्वमिति विशेषः अपरञ्च सर्वं मया सह तव तुल्यमेवेत्यभिप्रायः किञ्च शरदः शतं वर्षान् जीवेति वाक्यार्थः स्फुटएव । ३ ॥

इमꣳ स्तनमूर्ज्जस्वन्तन्धयापां प्रपीनमग्ने
सरिरस्य मध्ये ॥ उत्सं जुषस्व मधुमन्तम-
र्व्वन्त्समुद्रियꣳ सदनमाविशस्व ॥ ४ ॥

हे अग्ने त्वं इमं अपरोक्षामुं स्तनं धय पिब किम्भूतमूर्जस्वन्तं प्राणहेतुभूतं अपां अपशब्देन दुग्धमुच्यते सादृश्यात् प्रपीनं प्रपूरितं कुतइत्याकाङ्क्षायां सरिरस्य मध्येऽनसंस्रवन्तं इमं जुषस्व प्रीणस्वेति भावः किं भूतं मधुमन्तम् मधुरं हे अर्व्वन् उत सर्वदेहगतसमुद्रियं समुद्रसम्बन्धिनं सदनं आविशस्व प्रविशस्व एतेनैतदुक्तं भवति यथा समुद्रस्थो वाडवाग्निः सर्वमवरं जरयति तथा भवानपि यथा प्राप्त-मर्थं जरयति । ४ ॥

यस्ते स्तनः शशयो यो मयोभूर्य्येन विश्वा पुष्यसि वार्य्याणि ।
यो रत्नधा वसुविद्यः सुदत्रः सरस्वति तमिह धातवेऽकः ॥ ५ ॥

हे सरस्वति तं स्तनमिहास्मिन्स्थाने धातवे, धेट् पाने तुमर्थे तवे प्रत्ययः, पानार्थं अकः कुरु मम पानाय प्रयच्छेत्यर्थः लोडर्थे अपि लुङि गुणः तं कं यस्ते तव स्तन इव स्तनः शशयः शेते इति शशयः अच्प्रत्यये द्वित्वम् पूर्वस्यात्वं च छान्दसम् सुप्तइवास्ते अन्यैरनुपभुक्तत्वात् 'यस्ते स्तनो निहितो गुहायामिति श्रुतेः' यश्च

स्तनो मयोभूः मयः सुखं भावयति प्रापयति सर्वभूतानामिति मयोभूः यश्च रत्नधाः रत्नानि दधाति रत्नधाः रमणीयानां धनानां धारयिता यश्च वसुवित् वसुधनं विन्दति वेत्ति वा वसुवित् यश्च सुदत्रः सुष्ठु ददातीति सुदत्रः दाता धनवानन्यो दातुं न शक्नोति त्वत्स्तनस्तु धनवान्दाता चेति अन्येभ्य आधिक्यम् किञ्च येन स्तनेन विश्वानि सर्वाणि वार्याणि तरणीयानि वस्तूनि त्वं पुष्यसि पुष्णासि तं स्तनं मत्पानाय प्रयच्छेत्यर्थः ॥ ५ ॥

ओं आपो देवेषु जाग्रथ यथा देवेषु जाग्रथ ॥
एवमस्याᳫं सूतिकायाᳫंस पुत्रिकायां जाग्रथ॥६॥

हे आपः यूयं देवेषु जाग्रथ देवानां रक्षसां निन्द्रां मुञ्चथ यथा यूयं देवेषु जाग्रथ एवं तथा अस्यां सूतिकाया जाग्रथ किं भूतायां सपुत्रिकायां पुत्रसहितायाम् हे आपः यूयं देवेषु जाग्रथेति अपां स्वस्वप्रसूतकृत्ये अस्याः सपुत्राया रक्षार्थं जाग्रथेति प्रार्थनावाक्यार्थः ॥ ६ ॥

शण्डामर्काऽउपवीरः शौण्डिकेयऽउलूखलः ॥
मलिम्लुचो द्रोणासश्च्यवनो नश्यतादितः
स्वाहा ॥ ७ ॥

शण्डा शण्डाऽभिधानो बालग्रहः इत आहुतेर्नश्यतात् नष्टो भवतु एवं मर्कादयश्च्यवनतान्ताः सप्तबालग्रहान् नश्यतात् क्रियापदम् अष्टभिः सह प्रत्येकं सम्बध्यते अनया आहुत्या शण्डादयोऽष्टौ बालग्रहा नश्यन्त्विति वाक्यार्थः ॥ ७ ॥

ओं आलिखन्ननिमिषः किं वदन्त उपश्रुति हर्यक्षः कुम्भी शत्रुः पात्रपाणिर्नृमणिर्हन्त्री मुखः सर्षपारुणश्च्यवनो नश्यतादितः स्वाहा॥८॥

आलिखन्नित्यादि ये दश बालग्रहाः अत्रापि नश्यतादिति क्रियापदं प्रत्येकं दशभिरेव सम्बध्यते ते दश एव ॥ ८ ॥

ओं कूर्कुरः सुकूर्कुरः कूर्कुरो बालबन्धनश्चेच्चेच्छुनक सृज नमस्तेऽस्तु सीसरो लपेतापह्वर तत्सत्यम् ॥ यत्ते देवा वरमददुः स त्वं कुमारमेव वा वृणीथाः ॥ चेच्चेच्छुनक सृज नमस्तेऽस्तु सीसरोलपेतापह्वर तत्सत्यम् ॥ ९ ॥

कूर्कुरादीनि त्रीणि नामानि बालं कुमारं बध्नाति बालबन्धनः कुमारग्रहः बालबन्धनइति त्रिभिरेव कूर्कुरादिभिः सह प्रत्येकं सम्बध्यते चेत् चेदिति वीप्सादर्शनात् तेन कूर्कुरश्चेद्बालबन्धनः एतेषां मध्ये यदि कश्चिद्बालबन्धो स्ति तदा हे शुनक ते तव नमोऽस्तु त्वं सृज कुमारन्त्यजेत्यर्थः हे शुनक इतिकूर्कुरादीनां त्रयाणामेव साधारणमेकं सम्बोधनपदं किं च सीसरः तेषां पिताऽऽलपेदिति किं वदति अपह्वर अपगतकौटिल्यो भव कूर्कुरादीनामेकबालग्रहमध्ये यदि तद्वर्गोऽस्ति तदर्थमदीयनमस्कारेण पूतिनः पितुः सीसरस्य वचसा एनं कुमारन्त्यजत्विति प्रार्थनावाक्यार्थः तत्सत्यं यत्ते देवा इत्यादेरयमर्थः हे शुनक यत्ते देवा ब्राह्मणादयो

वरप्रार्थितं अदुः दत्तवन्तः स पूर्वोक्तरूपः त्वं कुमारं बालमेव वरं वृणीथाः इतवानसि ततश्चेदिति वीप्सायां अत्रापि देवैर्वरदानं त्वया च वरत्वेन कुमारस्यवरप्रार्थनं इत्युभयेन तत्सत्यं इत्यस्य संबन्धो विवक्षितः यद्यपि तदुभयं सत्यं तथाऽपि ते नमोऽस्तु त्यजसीति यद्यपि त्वया देवेभ्यः कुमारत्वेन प्रार्थितः तैश्च दत्तः तथापि मम नमस्कारेण तुष्ट. पितृवाक्येनैनं त्यजेति प्रार्थनावाक्यार्थः ॥९॥

यत्ते सरमा माता सीसरः पिता श्यामशबलौ भ्रातरौ । चेच्चेच्छुनक सृज नमस्तेऽ अस्तु सीसरो लपेतापह्वर तत्सत्यम् ॥ १० ॥

हे शुनक यत्ते तव सरमा शुनी माता, सीसरः पिता, श्याम शबलौ भ्रातरौ ततश्चेत्सत्यं अत्रापि वीप्सायां प्रयोजनं तदेव तथाऽपि नमोऽस्तु सीसरोलपेतापह्वरेति पूर्ववदेव तव माता सरमा सीसरः पिता भ्रातरौ श्यामशबलौ एतत्सत्यमेव तथापि मम नमस्कारेण तमेनं कुमारन्त्यजेति वाक्यार्थः, ह्रुङ् अपनयने इत्यस्य धातोरपपूर्वस्य लोटि रूपम् ॥ १० ॥

ओं न नामयति न रुदति न हृष्यति न ग्लायति यत्र वयं वदामो यत्र चाभिमृशामसि ॥ ११ ॥

यत्र कुमारे वयं वदामः किं वदामः वक्ष्यामीत्याकाङ्क्षत्वाच्च बोद्धव्यम् यत्र चाभिमृशामसि अभिसर्वतो भावेन यस्य दर्शनं कुर्मः कुमारः न नामयति अङ्गानामलङ्करोति कूर्कुरादिर्न भवतीत्यर्थः न रुदति रोदनपीड़ा युक्तो न स भवति न हृष्यति हर्षपीड़ा युक्तो न भवति ॥ ११ ॥

इति बालग्रहोपद्रवशान्तिः । नामकर्मणि वैदिकमन्त्रैरनुष्ठानं पारस्करेण नोपदर्शितं अतोऽस्माभिरपि तदीयव्याख्यानं न कृतमिति समाप्तं जातकर्म ॥

अथान्नप्राशनम् ।

देवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति ॥ सा नो मन्द्रेषमूर्ज्जं दुहाना धेनुर्वागस्मानुपसुष्टुतैतु स्वाहा ॥ १ ॥

देवा ब्रह्मादयः वाचं वाणीमजनयन्त: उत्पादयन्तः किं भूतां देवीं कान्त्यादिगुणवतीं तां वाचं विश्वरूपाः मनुष्यादिरूपाः पशवः वदन्ति देवा ये, या स्वल्पज्ञानत्वेन पशुत्वं सा वाक् धेनुर्भूत्वा अस्मानुपैतु उपगच्छतु उप इति व्यवहितेन एत्वित्यनेन सम्बध्यते हेतुगर्भविशेषणमाह धेनुः किं भूता नोऽस्माकं ऊर्जं सामर्थ्यं दुहाना पूरयन्ती ऊर्जं किं भूतं मन्द्रेषं मन्द्रो गम्भीरः अव्यक्तः इति यावत् तस्य इषं गमकं ज्ञापकं इति यावत् अव्यक्तः परोक्षोऽप्यर्थो येनावगम्यते तत्सामर्थ्यं अस्माकं पूरयन्तीत्यर्थः पुनः किं भूता सुष्टुता सुष्ठु स्तुता ॥ १ ॥

व्वाजो नोऽ अद्य प्रसुवाति दानं व्वाजो देवाँ ऋतुभिः कल्पयाति ॥ वाजो हि मा सर्ववीरं जजान व्विश्वाऽ आशा व्वाजपतिर्जयेयम् ॥२॥

वाजो अन्नं नोऽस्माकं अद्यान्नप्राशनसमये दानं होमरूपं प्रसुवाति अभ्यनुजानातु प्रपूर्वः सुवतिरभ्यनुज्ञाने वर्त्तते इत्युवट. किंच वाजः देवानिन्द्रादीनृतुभिः समयविशेषैः कल्पयाति योजयतु अस्मिन् कर्मणि हुतेनान्नेन देवाश्चिरकालं वर्त्ततामित्यर्थः हि यतः वाजः मा मां सर्ववीरं सर्वकार्येषु वीरं क्षमं चकार कृतवान् अतः कारणात् वाजपतिरन्नस्य ईश्वरोऽहं सर्वाः आशा जयेम प्रसुवाति कल्पयाति इति पदद्वयं लोटप्रत्यये रूपं ॥ २ ॥

प्राणेनान्नमशीय स्वाहा ॥ ३ ॥

प्राणेन प्राणवायुना अन्नमदनीयं भुंजे ॥ ३ ॥

अपानेन गन्धानशीय स्वाहा ॥ ४ ॥

अपानेन अपानवायुना गन्धानशीय ॥ ४ ॥

चक्षुषारूपाण्यशीय स्वाहा ॥ ५ ॥

चक्षुषा चक्षुरिन्द्रियेण रूपाणि शुक्लादीनि अशीय ॥ ५ ॥

श्रोत्रेण यशोशीय स्वाहा ॥ ६ ॥

श्रोत्रेण कर्णेन्द्रियेण यशः कीर्त्तिं अशीय अन्नगन्धरूपयशसां अशनमुपभोगमनुभवामीत्याशंसावाक्यार्थः अत्रचाशीयेत्युत्तमपुरुषप्रयोगात् कर्त्तृगोचराऽऽशंसा यद्यपि प्रतीयते तथाऽपि कुमारचित्तगोचरै वबोद्धव्या, तथा च श्रुतिः या वै काञ्चनयज्ञऽऽशिषं द्विजं ऋत्विजमाशासते यजमानस्यैव सेति। इति अन्नप्राशनमन्त्रव्याख्या।

अथ चूडाकरणमन्त्रव्याख्या ।

उष्णेन वायऽउदकेनैधि अदिते केशान्वप ॥ १ ॥

इति बालग्रहोपद्रवशान्तिः । नामकर्मणि वैदिकमन्त्रैरनुष्ठानं पारस्करेण नोपदर्शितं अतोऽस्माभिरपि तदीयव्याख्यानं न कृत-मिति समाप्तं जातकर्म ॥

अथान्नप्राशनम् ।

देवीं वाचमजनयन्त देवास्तां विश्वरूपाः
पशवो वदन्ति ॥ सा नो मन्द्रेषमूर्जं दुहाना
धेनुर्वागस्मानुपसुष्टुतैतु स्वाहा ॥ १ ॥

देवा ब्रह्मादयः वाचं वाणीमजनयन्तः उत्पादयन्तः किं भूतां देवीं कान्त्यादिगुणवतीं तां वाचं विश्वरूपाः मनुष्यादिरूपाः पशवः वदन्ति देवा ये, या स्वल्पज्ञानत्वेन पशुत्वं सा वाक् धेनुर्भूत्वा अस्मानुपैतु उपगच्छतु उप इति व्यवहितेन एत्वित्यनेन सम्बध्यते हेतुगर्भविशेषणमाह धेनुः किं भूता नोऽस्माकं ऊर्जं सामर्थ्यं दुहाना पूरयन्ती ऊर्जं किं भूतं मन्द्रेषं मन्द्रो गम्भीरः अव्यक्तः इति यावत् तस्य इषं गमकं ज्ञापकं इति यावत् अव्यक्तः परोक्षोऽप्यर्थो येना-वगम्यते तत्सामर्थ्यं अस्माकं पूरयन्तीत्यर्थः पुनः किं भूता सुष्टुता सुष्ठु स्तुता ॥ १ ॥

व्वाजो नोऽ अद्य प्रसुवाति दानं व्वाजो देवाँ
ऋतुभिः कल्पयाति ॥ वाजो हि मा सर्ववीरं
जजान व्विश्वाऽ आशा व्वाजपतिर्जयेयम् ॥२॥

वाजो अन्नं नोऽस्माकं अद्यान्नप्राशनसमये दानं होमरूपं प्रसुवाति अभ्यनुजानातु प्रपूर्वः सुवतिरभ्यनुज्ञाने वर्त्तते इत्युवट, किंच वाजः देवानिन्द्रादीनृतुभिः समयविशेषैः कल्पयाति योजयतु अस्मिन् कर्मणि हुतेनान्नेन देवाश्चिरकालं वर्त्ततामित्यर्थः हि यतः वाजः मा मां सर्ववीरं सर्वकार्येषु वीरं क्षमं चकार कृतवान् अतः कारणात् वाजपतिरन्नस्य ईश्वरोऽहं सर्वाः आशा जयेम प्रसुवाति कल्पयाति इति पदद्वयं लोटप्रत्यये रूपं ॥ २ ॥

प्राणेनान्नमशीय स्वाहा ॥ ३ ॥

प्राणेन प्राणवायुना अन्नमदनीयं भुंजे ॥ ३ ॥

अपानेन गन्धानशीय स्वाहा ॥ ४ ॥

अपानेन अपानवायुना गन्धानशीय ॥ ४ ॥

चक्षुषारूपाण्यशीय स्वाहा ॥ ५ ॥

चक्षुषा चक्षुरिन्द्रियेण रूपाणि शुक्लादीनि अशीय ॥ ५ ॥

श्रोत्रेण यशोशीय स्वाहा ॥ ६ ॥

श्रोत्रेण कर्णेन्द्रियेण यशः कीर्त्तिं अशीय अन्नगन्धरूपयशसां अशनमुपभोगमनुभवामीत्याशंसावाक्यार्थः अन्नचाशीयेत्युत्तमपुरुषप्रयोगात् कर्त्तृगोचराआशंसा यद्यपि प्रतीयते तथाऽपि कुमारचित्तगोचरै वबोद्धव्या, तथा च श्रुतिः या वै काञ्चनयज्ञन्धनं द्विजं ऋत्विजमाशासते यजमानस्यैव सेति। इति अन्नप्राशनमन्त्रव्याख्या।

अथ चूडाकरणमन्त्रव्याख्या ।

उष्णेन वायऽउदकेने ह्यदिते केशान्वप ॥ १ ॥

हे वाय हे वायो वायुसम्बोधनेनात्र कार्यकारणोपचारात् जल मेव सम्बोधितं हे जल किं भूतं अदिते अखण्डिते शीतत्वं उदकेन एहि संगतं कुरु सङ्गत्या च केशान्वप च्छिन्धि केशच्छेदनार्थं उष्ण-जलशीतजलयोः सङ्गतिरस्त्विति वाक्यार्थः, अदिते इति दोऽवख ण्डनइत्यस्य धातोः क्तिन् ॥ १ ॥

सवित्रा प्रसूता दैव्याऽआपऽ उंदन्तु ते

तनूं दीर्घायुत्वाय वर्च्चसे ॥ २ ॥

आपः जलानि ते तव कुमारस्य तनूर्देहावयवं उदन्तु क्लेदयन्तु उन्दी क्लेदने, आपः किं भूताः सवित्रा आदित्येन प्रसूताः जनिताः पुनः किं भूताः दैव्या दिवि आकाशे उत्पन्नाः किमर्थमुन्दन्तु दीर्घायुत्वाय चिरजीवित्वाय वर्चसे तेजसे ॥ २ ॥

ओषधे त्रायस्व स्वधिते मैनंठं॰ हिठं॰

सीरिति ॥ ३ ॥

हे ओषधे एनं कुमारं त्रायस्व रक्ष हे स्वधिते वज्र एनं कुमारं मा हिंसीः मा नाशय तव कुशैः क्षतरक्षमेनं कुमारं वज्र्यो मा हिनस्तु इति वाक्यार्थः ॥ ३ ॥

शिवो नामाऽसि स्वधितिस्ते पिता

नमस्तेऽ अस्तु मा मा हिठं॰ सीः ॥ ४ ॥

हे क्षुर शिवो नामासि शिवः कल्याणं इत्यभिधानमसि शिवइति तव नामेत्यर्थः किं च स्वधितिः वज्रं ते तव पिता जनकः वज्रात्तवोत्पत्तिरित्यर्थः एवं भूताय तुभ्यं नमोऽस्तु त्वं सा मां मा

हिंसीः मा व्यथय स्तुतिपूर्वकं याश्चावाक्यार्थः अत्रापि पूर्ववत्कुमारविषयिण्येवाशंसा बोद्धव्या ॥ ४ ॥

निर्वर्त्तयाम्यायुषेऽन्नाद्याय प्रजननाय
रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय ॥ ५ ॥

अहं क्षुरं निवर्तयामि संयोजयामि प्रनिपूर्वो वर्त्तिः संयोगेइत्यपि पाठः, संलग्ने वर्तते इति कर्कभाष्यम्, क्षुरस्य कर्मत्वं प्रकरणात् किमर्थं क्षुरस्य योजनमित्याह आयुषे जीवनाय तथा अन्नाद्याय अन्नं च यत् अद्यं चेति अन्नाद्यं तदर्थं तथा प्रजननाय प्रजननं प्रसवशक्तिः तदर्थं तथा रायस्पोषाय रायो धनस्य पोषाय पुष्ट्यर्थं तथा सुप्रजास्त्वाय शोभनसन्ततिमत्वार्थं तथा सुवीर्याय उत्कृष्टवीर्यवत्वार्थं च अनेन क्षुरकर्मणा कुमारस्यान्नादीनि भवन्त्वित्याशंसावाक्यार्थः, सुप्रजास्त्वायेति सकारश्छान्दसः, वर्णागमो वर्णविपर्ययश्चेति न्यायात् ॥ ५ ॥

येनावपत्सविता क्षुरेण सोमस्य राज्ञो वरुणस्य
विद्वान् ॥ तेन ब्रह्माणो वपतेदमस्यायुष्यं
जरदष्टिर्यथाऽसत् ॥ ६ ॥

हे कुमार तेन क्षुरेण ते तव ब्रह्माणः ब्रह्मा तथा वपते मुण्डयति तेन केन येन क्षुरेण सविता आदित्यः सोमस्य अवपत् मुण्डितवान् अर्थात् केशान्, किं भूतस्य सोमस्य राज्ञः न केवलं सोमस्य किन्तु वरुणस्य च किं भूतः आदित्यः विद्वान् वेदवित् तथा कंकं यथा इदं चूडाकरणं तव आयुष्यं असत् भूयात् किं भूतमायुष्यं

जरदष्टिः जरत् वार्द्धक अश्नुते व्याप्नोति इति जरदष्टिर्वार्द्धकपर्य न्तमस्यायुर्यथा स्यादित्यर्थः, आदित्येन सोमवरुणयोर्येन क्षुरेण चूडाकर्म कृतं तेन ब्रह्मा करोतीति स्तुत्वा तत्तवायुष्यं भूयादित्याशं सावाक्यार्थः, ब्रह्माणो इति प्रथमाबहुवचने षष्ठेरकवचनं, जरदष्टि रिति अजहल्लिङ्गमेव ॥ ६ ॥

त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषम् ॥
यद्देवेषु त्र्यायुषं तन्नोऽअस्तु त्र्यायुषम् ॥७॥

त्रीणि आयूंषि समाहृतानि त्र्यायुषं आयुः शब्दस्यावस्थावचन वाल्ययौवनवार्द्धकमवस्थात्रयं आयुषमित्यर्थः तथा च कश्यपस्य ऋषेः यत् त्र्यायुषं जमदग्नेः यत् त्र्यायुषं देवानां यत् त्र्यायुषं तत् त्र्यायुषं नः अस्माकमस्तु ॥ ७ ॥

ओं येन भूरिश्चरा दिवं ज्योक्च पश्चाद्धि
सूर्यम् ॥ तेन ते वपामि ब्रह्मणा जीवातवे
जीवनाय सुश्लोक्याय स्वस्तये ॥ ८ ॥

येन क्षुरेण साधनभूतेन भूरिश्चन्द्रमा दिवं ज्योक्च स्वर्गे सङ्गतोऽभवत् चन्द्रमाः किं भूतः चरः भ्रमणशीलः पश्चात्सएव चन्द्रमा अधिसूर्यं सूर्ये ज्योक् संगतोऽभवत् तेन क्षुरेण ते तव वपामि त्वां चौरयामि कस्मै फलायेत्याकाङ्क्षायामाह ब्रह्मणा ब्रह्मणे वेदलाभार्थं जीवातवे जोवनौषधार्थं जीवनोपायनार्थमित्यर्थः जीवनाय चिरकालजीवनार्थं सुश्लोक्याय सु शोभनं श्लोक्यं यशस्वदीयलाभार्थं स्वस्तये कल्याणार्थम् । ८ ॥

ओं यत्क्षुरेण मज्जयता सुपेशसा वप्ता वा वपति केशांश्छिन्धि शिरो मा ऽस्यायुः प्रमोषीः ॥ ९ ॥

यत्क्षुरेण एतस्य कुमारस्य वप्ता वा वपति चौरं समाप्य पुनः क्षुरं वारत्रयं भ्रामयति केशांश्छिन्धि ततस्तेन पुनः क्षुरेणाप्यस्य केशान् छेदय मा शिरः, अस्य शिरश्छेदनं मा कुरु माऽस्यायुः प्रमोषीः आयुः खण्डनं मा कुरु क्षुरेण किं भूतेन शिरः मज्जयता निः कल्मषं कुर्वता पुनः किं भूतेन सुपेशसा शोभनायुधेनावपति इति मध्यमपुरुषैकवचने तिङां तिङो भवन्तीति प्रथमपुरुषैकवचनं, प्रमोषीरिति मुषस्तेये लुङ्मध्यमपुरुषैकवचनम् मज्जयतेति, टुमस्जो शुद्धौ शत्रन्तात्तृतीयैकवचनम्, वप्तावेति वा शब्दः समुच्चयार्थः । इति चूडाकरणमन्त्रव्याख्यानम् ॥ ९ ॥

अथोपनयनम् ।

यं॒ नेन्द्राय बृहस्पतिर्वासः पर्य॑दधादमृतम् ॥
तेन त्वा परिदधाम्यायुषे दीर्घायुत्वाय
बलाय वर्चसे ॥ १ ॥

बृहस्पतिर्देवानामाचार्यः येन विधानेनेन्द्राय इदं वासः पर्यदधात् परिधापितवान् वासः किं भूतं अमृतं तेन अहतं तेन विधानेन त्वा त्वां परिदधामि परिधापयामि किमर्थं आयुषे जीवनाय दीर्घायुत्वाय चिरजीवित्वाय बलाय सामर्थ्याय वर्चसे तेजसे पर्यदधात्परिदधामि इतिद्वयमपि णिजर्थम् ॥ १ ॥

इयं दुरुक्तम्परिबाधमाना वर्णं पवित्रं पुनती

मऽआगात् ॥ प्राणापानाभ्यां बलमादधाना

स्वसा देवी सुभगा मेखलेयम् ॥ २ ॥

इयं मेखला आगात् आगतवती किं कुर्वाणा मे मम दुरुक्तं अध्याप्ययमनुपवीतीति दुर्वचनं परिबाधमाना सर्वतो भावेन खण्डयन्ती अत एव देवी स्तवादिविषया पुनः किं भूता वर्णं द्विजाति पवित्रं उत्कृष्टं पुनती धावयन्ती ईदृशीयं मेखला स्वसा अस्तु भगिनीवन्नित्यमभ्युदयिनी अस्तु किं भूता प्राणापानाभ्यां बलं सामर्थ्यं अर्पयन्ती पुनः किं भूता सुभगा अकर्कशा सुखस्पर्शेति ॥ २ ॥

यज्ञोपवीतं परमं पवित्रं प्रजापतेर्य्यत्सहजम्पुरस्तात् ॥ आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं

यज्ञोपवीतं बलमस्तु तेजः ॥ ३ ॥

हे माणवक यज्ञोपवीतं प्रतिमुञ्च धारय प्रतिपूर्वो मुञ्चतिर्धारणे वर्त्तते यज्ञोपवीतं किं भूतं आयुष्यं आयुर्वृद्धिकरं अग्र्यं श्रेष्ठं शुभ्रं श्वेतं निर्मलं परमं पवित्रं अतिशयेन पवित्रं पुनः किं भूतं पुरस्तात्पूर्वं प्रजापतेर्ब्रह्मणः सहजं सहजातं प्रजापतिना सह एक समये जातमित्यर्थः एतत्परिधानेन बलमस्तु तेजश्चास्तु इति ।३।

यो मे दण्डः परा पतद्वैहायसोऽधिभूम्याम् ॥

तमहं पुनरादद ऽआयुषे ब्रह्मणे ब्रह्मवर्चसाय॥४॥

मे मम यो दण्डः अधिभूम्यां भूमेरुपरि परापतत् पतितः तं दण्डं अहं पुनराददे गृह्णामि किं भूतः वैहायसः विहाय अकाशं

तत्र भवः एतावता प्राक्तनजन्मन्यपि अहं द्विजआसं अस्मिन्नपि जन्मनि दण्डं गृह्णामीति वाक्यार्थः किमर्थं दण्डं गृह्णामि आयुषे जीवनार्थं ब्रह्मणे वेदाय ब्रह्मवर्चसाय तेजः प्राप्त्यर्थम् ॥ ४ ॥

इन्द्रस्य ब्रह्मचार्य्यस्यग्निराचार्य्यस्तवाहमाचार्य्यः श्रीअमुकशर्मन् ॥ ५ ॥

इन्द्रस्य परमेश्वरस्य ब्रह्मचारी असि तवाग्निराचार्यः सर्वेषामेव द्विजातीनां सामान्येनाग्नेर्गुरुत्वात् यथाऽहं गुरुरग्निर्द्विजातीनामिति श्रुतिः, इदानीं तु तवोपनयनकर्त्तृत्वेनाहमाचार्यः ॥ ॥ ५ ॥

प्रजापतये त्वा परिददामि, देवाय त्वा सवित्रे परिददामि, अद्भ्यस्त्वौषधीभ्यः परिददामि, द्यावापृथिवीभ्यां त्वा परिददामि, विश्वेभ्यस्त्वा देवेभ्यः परिददामि, सर्वेभ्यस्त्वा भूतेभ्यः परिददाम्यरिष्ट्यै ॥ ६ ॥

हे माणवक त्वा त्वां प्रजापतये ब्रह्मणे परिददामि समर्पयामि एवं सवित्रे सूर्याय देवाय दानादिगुणयुक्ताय, अद्भ्यः जलेभ्यः, ओषधीभ्यः व्रीह्यादिभ्यः, द्यावापृथिवीभ्यां आकाशभूमिभ्यां, विश्वेभ्यो देवेभ्यः सर्वेभ्यो देवेभ्य इन्द्रादिभ्यः भूतेभ्यः राक्षसादिभ्यः, परिददामीति सर्वत्रान्वेति किमर्थं अरिष्ट्यै रिष्टिरापत्तदुपशमनाय, रिष्टिरिति रिषहिंसायामित्यस्य धातोः क्तिनि रूपं, न रिष्टिः अरिष्टिः ॥ ६ ॥

अग्ने सुश्रवः सुश्रवसं मा कुरु, यथा त्वमग्ने
सुश्रवः सुश्रवाऽ असि, एवं माꣳ सुश्रवः सौश्रवसं
कुरु ॥ यथा त्वमग्ने देवनां यज्ञस्य निधिपा-
ऽअसि, एवमहं मनुष्याणां वेदस्य निधिपो
भूयासम् ॥ ७ ॥

हे अग्ने सुश्रुवः सुष्ठु श्रवः नाम कीर्त्तिर्यस्य स सुश्रवाः तादृशं मां सुश्रवसं शोभनकर्णेन्द्रियं कुरु वेदाध्ययनार्थं मामविकलेन्द्रियं सफलेन्द्रियं कुर्वित्यर्थः, एवं हे अग्ने यथा त्वं सुश्रवः सुश्रवा असि सुश्रवे अक्षरादौ सुश्रवाः शोभनकर्णोऽसि एवं तथा मा मां सुश्रवः सौश्रवसं कुरु, सुश्रवे यशसि सौश्रवसं शोभनश्रवणजनितज्ञानशालिनं कुरु, तथा हे अग्ने त्वं यथा देवानां यज्ञस्य निधिपा असि देवानामिन्द्रादीनां यज्ञस्य यज्ञसम्बन्धेन निधिपा निधिरक्षकोऽसि भाण्डागारिको भवसि एवमहं मनुष्याणां वेदस्य निधिपो भूयासं वेदस्य भाण्डारिको भवेयमित्यर्थः ॥ ७ ॥

अग्नये समिधमाहार्षं बृहते जातवेदसे ॥
यथा त्वमग्ने समिधा समिध्यसऽएवमहमायुषा
मेधया वर्चसा प्रजया पशुभिर्ब्रह्मवर्चसेन
समिन्धे जीवपुत्रो ममाचार्यो मेधाव्यहमसा-
न्यनिराकरिष्णुर्यशस्वी तेजस्वी ब्रह्मवर्चस्यन्नादो
भूयासꣳ स्वाहा ॥ ८ ॥

हे अग्ने अग्नये समिधमाहार्षं आहृतवानस्मि कस्मै जातवेदसे सर्वं कर्मसाक्षिचैतन्यस्वभावफलदातृत्वेन जातं जातं वोत्तेजाः तेषु जातेषु विद्यते जातान्जातान्वित्ते इति जातवेदास्तस्मै यदाजातयुक्तवेदः वेदोक्तकर्मफलं यस्मात्स जातवेदास्तस्मै अग्नये तुभ्यमेवेत्यर्थः किं भूताय बृहते जाज्वल्यमानाय हे अग्ने यथा त्वं समिधा समिध्यसे मया त्वं समाहितया अनया समिधा ज्वलसि एवमहं समिध्यसे सुप्रकाशी भवामि कैः आयुषा जीवनेन मेधया बुध्या वर्चसा तेजसा प्रजया सन्तत्या पशुभिर्गवादिभिर्ब्रह्मवर्चसेन ब्रह्मतेजसा किं च ममाचार्यो जीवपुत्र, मेधावी च भवत्विति शेषः अहं अनिराकरिष्णुः असानि भवामि अग्नीनाधाय यागस्यानिराकरणकारी अनिराकरिष्णुः नित्यं यागकारी भवामीत्यर्थः किं च अहं आयुष्मान् यशस्वी तेजस्वी ब्रह्मवर्चस्वी वेदाध्ययनवीर्यवान् अन्नादः भूयासं कदाचिदपि ममान्नविच्छेदो मा भवत्वित्यर्थः अनया कामनया अग्नये स्वाहा सुहुतमस्तु ॥ ८ ॥

तनूपाऽअग्नेऽसितन्वं मे पाह्यायुर्दाऽअग्नेऽस्या
४
युर्मेदेहि वर्चोदाऽअग्नेऽसि वर्चो मे देहि ॥
अग्ने यन्मे तन्वाऽऊनन्तन्मऽआपृण ॥ ९ ॥
४

हे अग्ने तनूपाऽसि तनूं शरीरं तस्या पाता रक्षकः असि अतो मे तनूं शरीरं पाहि रक्ष 'आयुर्दा अग्नेऽस्यायुर्मे देहि' हे अग्ने आयुः प्रदोऽसि अतः आयुर्मे देदि 'वर्चोदा अग्नेऽसि वर्चो मे

देहि' वर्चस्तेज: 'अग्ने यन्मे तन्वा ऊनं तन्मऽआपृण' हे अग्ने तन्वा शरीरस्य मे यत् ऊनं न्यूनं तन्मे आपृण आपूरय, तन्वमिति तनुशब्दस्य द्वितीयैकवचने इयङुवङ्प्रकरणे "तन्वादीनाञ्छन्दसुप संख्यान" मिति यणादेश: ॥ ९ ॥

मेधां मे देव: सविता आदधातु ॥ मेधां मे देवी सरस्वती आदधातु, मेधां मेऽअश्विनौ देवावाधत्तां पुष्करस्रजौ ॥ १० ॥

अश्विनीकुमारौ देवौ मे मम मेधां आधत्तां किं भूतौ पुष्कर-स्रजौ पुष्करं कमलं तन्मयी माला ययोस्तौ पुष्करस्रजौ एता: सर्वा: सवित्रादिदेवताप्रार्थना अग्नावेव बोद्धव्या ॥ १० ॥

अङ्गानि च मऽआप्यायन्तां, वाक्चमऽआप्यायतां, प्राणश्च मऽआप्यायतां, चक्षुश्च मऽआप्यायतां, यशो बलं च मऽआप्यायताम् ॥११॥

मे ममांगानि शरीरावयवा: आप्यायन्तां स्फीता भवन्तु न केवलं मेधादिकं किं तु एतदपि भवत्विति वाक्यार्थ: वाक्च मऽआप्यायतामित्यादि निगदव्याख्यातम् ॥ ११ ॥

येऽप्स्वन्तरग्नय: प्रविष्टा गोह्योपगोह्यो मयूषो मनोहास्खलो विरुजस्तनूदूषुरिन्द्रियहाता-न्विजहामि यो रोचनस्तमिह गृह्णामि ॥ १ ॥

अप्सु जलेष्वन्तर्मध्ये अग्नयः प्रविष्टास्तानहं विजहामि ते के गोह्यः उपगोह्यः मयूखादयोऽष्टौ खसत्तावन्तो दोषावहत्वेन प्रतीयन्ते अतएतान् विहाय इह जले योऽग्निः रोचननामा कल्याणनामा तं गृह्णामि स्नानार्थं जले गोह्यादीनग्नीन् दोषावहान् त्यक्त्वा कल्याणप्रकाशकाग्निसहितं जलं गृह्णामीति वाक्यार्थः ॥ १ ॥

तेन मामभिषिञ्चामि श्रियै यशसे ब्रह्मणे ब्रह्मवर्चसायेति ॥ २ ॥

तेन जलेन इममात्मानमभिषिञ्चामि किमर्थं श्रियै लक्ष्मीलाभाय यशसे यशोलाभाय ब्रह्मणे ब्रह्मज्ञानलाभाय ब्रह्मवर्चसाय ब्राह्मतेजो लाभाय ॥ २ ॥

येन श्रियमकृणुतां येनावमृशतां सुराम्। येनाक्ष्यावभ्यषिञ्चतां यद्वां तदश्विना यशः ॥ ३ ॥

तेनेति मन्त्रं पूर्वस्थं वर्त्तते तेन केन हे अश्विनौ युवां येन जलेन श्रियमकृणुतां लक्ष्मीं च कृतवन्तौ यथा येन सुरां सुराजनितदोषम् अवमृशतां मार्जितवन्तौ यथा येनाक्षौ अक्षिणी अभ्यषिञ्चतां अभिषिक्तवन्तौ तथा वां युवयोर्यज्जलं यशः यशोहेतुर्ममाप्यस्त्वित्यध्याहार्य्यं, उदुत्तममिति स्नानप्रकरणे व्याख्यातम् ॥३॥

उद्यन्भ्राजभृष्णुरिन्द्रोमरुद्भिरस्थात्प्रातर्यावभिरस्थाद्दशसनिरसिदशसनिम्मा कुर्वाविदन्मा गमयोद्यन्भ्राजभृष्णुरिन्द्रो मरुद्भिरस्थाद्दिवा

यावभिरस्थात् शतशनिरसि शतशनिं मा
कुर्वाविदन्मा गमयोद्यन्भ्राजभृष्णु,रिन्द्रो
मरुद्भिरस्थात्सायं यावभिरस्थात् सहस्रशनि-
रसि सहस्रशनिं मा कुर्वाविदन्मा गमय ॥४॥

इन्द्रः आदित्यः उद्यन् उदयं कुर्वन् अस्थात् स्थितोऽभवत् किं भूतः भ्राजभृष्णुः भ्राजं रश्मिं विभर्तीति भ्राजभृष्णुः प्रातः प्रत्यूषे मरुद्भिर्देवैः सह अस्थात् स्थितोऽभवत् किं भूतैर्देवैर्यावभिर्यावद्भि र्यावन्तो देवास्तैः सह स्थितोऽभवदित्यर्थः ततः हे आविदन् सर्वं जानन् आदित्य त्वं दशशनिरसि बहुधनोऽसि अतो मा मां दशशनिम्बहु धनं कुरु किं च मा मां ब्रह्मचर्यादुतीर्णमागमय जानीहि द्वितीयतृतीययोर्दिवायावभिः सायं यावभिरिति शतश- निः सहस्रशनिरसिरित्येतावन्मात्रविशेषः तत्र दिवा सायमितिप्र सिद्धार्थं शतसहस्रशब्दौबहुत्ववाचिनावेवान्यत्सर्वं समानं, एवं आ- दित्यं स्तुत्वा हे आदित्य मां बहु धनं कुरु ब्रह्मचर्यादुतीर्णं मां जानीह्योति याच्ञावाक्यार्थः, अत्र यावद्भिरित्यत्र वर्णागमो वर्णवि- पर्ययश्चेति दकारवर्णलोपश्छान्दस', आगमयइति कुर्वाविदन्निति अत्र स्थितेन व्यवहितेन आङा सम्बधः ॥ ४ ॥

अन्नाद्याय व्यूहध्वꣳ सोमो राजाय मागमत् ॥
समे मुखं प्रमाक्ष्यते यशसा च भगेन च ॥ ५ ॥

हे वनस्पते व्यूहध्वं प्रसिद्धो भव यं वनस्पतिं अर्थात् त्वा त्वां चन्द्रमा सोमः आगमत् आगतवान् राजा किं भूतः सोमः वनस्प-

तीनां प्रभुः स वनस्पतिर्भवान् इति यावत् मे मम सुखं प्रसार्घ्यंते शोधयिष्यति केन यशसा च कीर्त्त्या वा भगेन सौभाग्येन च किमर्थं अन्नाद्याय अन्नं च आद्यं चेति अन्नाद्यं तस्मै, अत्र व्यूहध्वमिति ऊहवितर्के विपूर्वः प्रसिद्धार्थः "तिङां तिङो भवन्ती"त्येकवचनं, प्रसार्घ्यंतइति सृजूषशुद्धौइति लिङ रूपम् ॥ ५ ॥

ओं प्राणापानौ मे तर्पय चक्षुर्मे तर्पय श्रोत्रं मे तर्पय ॥ ६ ॥

प्राणापानौ मे तर्प्पय इति, भो अनुलेपनसुगन्धद्रव्याधिष्ठात्देवते प्राणापानौ मित्रावरुणदेवताकौ मे मम तर्पय अन्यत् व्यक्तार्थमेतत् ॥ ६ ॥

ओं पितरः शुन्धद्ध्वम् ॥ ७ ॥

हे पितरः शुन्धध्वं शोधयत मामिति शेषः ॥ ७ ॥

सुचक्षाऽअहमक्षीभ्यां भूयासꣳ सुवर्च्चा मुखेन सुश्रुत्कर्णाभ्यां भूयासम् ॥ ८ ॥

अहं अक्षीभ्यां सुचक्षाः शोभनदृष्टिः भूयासं सुवर्चाः सुखेन वर्चाः शोभनदीप्तिः सुश्रुत्कर्णाभ्यां सुश्रुत् शोभनश्रावी ॥ ८ ॥

परिधास्यै यशोधास्यै दीर्घायुत्वाय जरदष्टिरस्मि ॥ शतं च जीवामि शरदः पुरूची रायस्पोषमभिसंव्ययिष्ये ॥ ९ ॥

अहं परिधास्ये परिधानं करिष्यामि यशोधास्ये कीर्तिं धारयिष्यामि हेतुहेतुमद्भावो बोद्धव्यः अनेन परिधानेन यशो भविष्य-

तीर्थः, किं च अनेन परिधानेन शरदः वर्षस्य शतं जीवामि पुरूचीः बहुतेजाः सन् रायस्पोषं धनसमृद्धिं संव्ययिष्ये आवरणं करिष्यामीत्यर्थः, रायस्पोषमिति 'सुपां सुपो भवन्तीति' चतुर्थ्यर्थे द्वितीया, संव्ययिष्यइतिव्येञ्संवरणे इत्यस्य रूपम् ॥ ९ ॥

यशसा मा द्यावापृथिवी यशसेन्द्राबृहस्पती॥ यशो भगस्य मा ऽऽविदद्यशो मा प्रतिपद्यताम् ॥१०॥

द्यावापृथिवी आकाशपृथिव्यौ मा मां ऽऽच्छादयेतामित्यध्याहार्य्यं केन यशसा कीर्त्या किं च इन्द्राबृहस्पती इन्द्रस्य यशसा मा माच्छादयेतां किं च यशः भगः मा मां आविदत् प्राप्नोतु भगः सौभाग्यं किं च यशः मां प्रतिपद्यतां आगच्छतु पुनः पुनरभिधानमादराभिधानार्थं, अत्रानेन वस्त्राच्छादनेन एतानि मम सन्त्विति वाक्यार्थः ॥ १० ॥

याऽआहरज्जमदग्निः श्रद्धायै कामायेन्द्रियाय। ताऽअहं प्रतिगृह्णामि यशसा च भगेन च॥११॥

याः पुष्पस्रजः जमदग्निर्ऋषिः आहरत् आहृतवान् किमर्थं श्रद्धायै श्रद्धार्थं एवमेवेति निश्चयः श्रद्धाकामाय अभिलषितसिद्ध्यर्थं इन्द्रियाय चक्षुरादिपर्य्यन्ताय ताः पुष्पस्रजः अहं प्रतिगृह्णामि किमर्थं यशसा यशसे भगेन भगाय तथा चानेन पुष्पस्रग्ग्रहणेनैतत्सर्वं मम भवत्विति वाक्यार्थः ॥ ११ ॥

यद्यशोऽप्सरसामिन्द्रश्चकार विपुलं पृथु ॥ तेन सङ्ग्रथिताः सुमनसऽआबध्नामि यशो मयि ॥१२॥

इन्द्रः अप्सरसां उर्वशीप्रभृतीनां यत् यशस्कारं रूपवत्त्वमिति शेषः किं भूतं यशः विपुलं विस्तीर्णं पृथु बहुतरं तेन यशसा संग्रथिताः सम्यग्ग्रथिताः सुमनसः पुष्पाणि मयि आबध्नामि किमर्थं यशसा यशसे तथा चानेन यशसा सूत्रस्थानीयेन संग्रन्थितानि पुष्पाणि आत्मन्याबध्नामि तेन तादृग्यशो मम भवत्विति वाक्यार्थः यशइति चतुर्थ्यर्थे प्रथमा ॥ १२ ॥

युवा सुवासाः परिवीतऽआगात्सऽउश्रेयान् भवति जायमानः ॥ तं धीरासः कवयऽउन्नयन्ति स्वाध्यो मनसा देवयन्तः ॥ १३ ॥

यः युवा सुवासा शोभनवस्त्रधारी परिवीतं तेन वस्त्रेण परिवेष्टितः सन् आगात् आगतवान् स श्रेयान् भवति श्रेष्ठो भवति स जायमानः स जातनामइत्यर्थं, तं युवानं धीरासः उन्नयन्ति उत्कर्षयन्ति धीराः किं भूताः कवयः कीर्त्तिवक्तारः पुनः किं भूताः स्वाध्यः सुष्ठाहिताधीर्येषां ते स्वाध्यः पुनः किं भूताः मनसा हृदयेन देवयन्तः स्तुवन्तः ॥ १३ ॥

अलङ्करणमसि भूयोऽलङ्करणं भूयात् ॥ १४ ॥

हे कर्णकुण्डल अलङ्करणमसि प्रसाधनं भवसि इति ते तव स्वभावः अतः भूयः उत्तरोत्तरं अलङ्करणं मम कर्णभूषणं भूयात् भूयो भव ॥ १४ ॥

वृत्रस्यासि कनीनकश्चक्षुर्दाऽअसि चक्षुर्मे देहि ॥ १५ ॥

हे अञ्जन वृत्रस्य वृत्रनाम्नः शक्तिशालिनोऽसुरस्य कनीनकः

कनीनिका अक्षितारका असि भवसि अतस्त्वं चक्षुर्दा असि चक्षुर्दायको भवसि तस्मान्ममापि चक्षुर्देहि तथा च यतः कारणादृक्षस्याक्षितारकोत्पन्नमञ्जनं त्वमसि अतोऽन्येषां चक्षुर्दाता असि अतस्तवांजनेन मम चक्षुः प्रकाशो भवत्विति याञ्चावाक्यार्थः ॥ १५ ॥

रोचिष्णुरसि ॥ १६ ॥

हे दर्पण रोचिष्णुरसि प्रकाशनशीलोऽसि अतो मामपि प्रकाशयेत्यभिप्रायः ॥ १६ ॥

बृहस्पतेश्छदिरसि पाप्मनो मामन्तर्द्धेहि
तेजसो यशसो मामन्तर्द्धेहि ॥ १७ ॥

हे छत्र त्वं बृहस्पतिर्देवाचार्यस्य छदिः अपवारणमसि भवसि अतः मां पाप्मनः पापात् अन्तर्द्धेहि आवृतं कुरु यथा मम पापसम्बन्धो न भवति तथा कुर्वित्यर्थः न केवलं पापात् किं तु तेजसः आदित्यतापादिरूपात् मामन्तर्द्धेहि किमर्थं यशसे यशोऽर्थं तथा च हे छत्र यतस्त्वं बृहस्पतेरपि पापसन्तापादिवारको अतस्तेभ्योऽपिधाय यशस्विनं मां कुर्वित्याशंसावाक्यार्थः, यशसइति चतुर्थ्यर्थे षष्ठी ॥ १७ ॥

प्रतिष्ठे स्थो विश्वतो मा पातम् ॥ १८ ॥

हे उपानहौ काष्ठपादुके युवां प्रतिष्ठे स्थः उपक्रान्तगतिक्रियायाः अत्यागः प्रतिष्ठा तन्निमित्तत्वात् युवामेव प्रतिष्ठे स्थः भवथः अतश्च मा मां पातं रक्षतम् कुतः सर्वस्माद्गतिविरोधिनः कण्टकादेः यतो युवां प्रतिष्ठानिमित्ते अतस्त्वत्प्रसादात् मम कुत्रापि गतिप्रतिबन्धो माऽस्त्विति वाक्यार्थः ॥ १८ ॥

विश्वाभ्यो मा नाष्ट्राभ्यस्परिपाहि सर्वतः ॥१९॥

हे वैणवदण्ड मा मां परिपाहि सर्वतो भावेन रक्ष कुतः नाष्ट्राभ्यः नाकारिणीभ्यः विश्वाभ्यः सर्वाभ्यः राक्षससर्पशृङ्गादिभ्य इत्यर्थः, सर्वतः सर्वासु दिक्षु इत्यर्थः ॥ इति श्रीमनुघ्नकृतमन्त्रार्थदीपिकायां उपनयनमन्त्रव्याख्यानम् ॥ १९ ॥

अथ प्रतिष्ठामन्त्रौ ।

एतं ते देव सवितर्य्यज्ञं प्राहुर्बृहस्पतये ब्रह्मणे ॥
तेन यज्ञमव तेन यज्ञपतिं तेन मामव ॥१॥

हे सवितर्देव दानादिगुणयुक्त एतत् यज्ञं ते त्वदीयं प्राहुः किं च बृहस्पतये ब्रह्मणे बृहस्पतिनिमित्तं किं भूताय बृहस्पतये ब्रह्मणे देवानां सर्वकर्माधिष्ठात्रे मानुषोऽपि तदधिष्ठितएव कर्मणि ब्रह्मा भवति तेन हेतुना हे सवितः यज्ञं अव रक्ष तेन यज्ञपतिं यजमानं अव तेन मां ऋत्विजं अव तथा च त्वदीयो यज्ञः यज्ञसाधनं रक्षेति वाक्यार्थः, अयं मन्त्रः कुत्रचिदेव प्रसिद्धः ॥ १ ॥

मनो जूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं
तनोत्वरिष्टं यज्ञꣳसमिमं दधातु ॥
विश्वे देवासऽइह मा दयन्तामों प्रतिष्ठ ॥ २ ॥

मनः आज्यस्य रसं जुषतां सेवतां मनः किं भूतं जूतिः अतीतानागतवर्त्तमानेषु गन्तृ किं च बृहस्पतिः सुराचार्यः इमं यज्ञं तनोतु विस्तारयतु स एव इमं यज्ञं अरिष्टं कृत्वा हिंसा कर्म न

क्षत्वा सन्दधातु, ऋषहिंसायां कर्म न रिष्टं अरिष्टं किं च विश्वे देवासः विश्वेदेवाः सर्वे देवा इह यज्ञे मादयन्तां हर्षं कुर्वन्तु, स्वार्थिको णिच् ओमिति अवतेर्व्याप्नोतेर्वा ओं यथा च रचित्वाऽप्येति वा इह प्रतिष्ठाप्रकारो तिष्ठेत्यर्थः ॥ २ ॥

अथ बर्हिर्होममन्त्रः ।

देवा गातुविदो गातुँ वित्वा गातुमित ॥

मनसस्पतऽइमं देव यज्ञꣳ स्वाहा वाते ऽधाः ॥१॥

अस्याः पूर्वार्द्धेन देवता विसृजति हे देवाः गातुविदो यज्ञविदः गातुरिति यज्ञनाम प्राचीनं, गातुं यज्ञं वित्वा विदित्वा गातुं अर्थात् ऽअग्ने त्वं नः इतः आगच्छत तथा च यज्ञपरम्परास्तु अविच्छिन्ना मम नाभवत यूयमित्यर्थः एवं देवान् विसृज्य इदानीं चन्द्रमसमाह हे मनस्पते चन्द्रमः देव इमं यज्ञं वाते वायौ अधाः धारय वाते हि यज्ञोऽवतिष्ठते, तथा च श्रुतिः वायुरेवाग्निस्तस्याध्य देवाध्वर्युकर्म करोत्येऽतमेवाप्येतीति ॥ १ ॥

अथ स्वस्त्ययनमन्त्रः ।

स्वस्ति नऽइन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः ॥ स्वस्ति नस्तार्क्ष्योऽ अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥ १ ॥

इन्द्रः नः स्वस्ति कल्याणं दधातु पूषाऽपि किं भूतः इन्द्रः वृद्धश्रवाः बहुधनः श्रवः शब्दो धनवचनः कीर्तिवचनो वा महश्श-

ध्रो वा बृहस्पतिर्वा यूयं किं भूतः विश्ववेदाः सर्वधनः सर्वयज्ञो वा तार्क्ष्यो गरुडः नः स्वस्ति दधातु तार्क्ष्यः किं भूतः अरिष्टनेमिः अनुपहिंसितास्त्रः अनुपहतचक्रधारः बृहस्पतिश्च नः स्वस्ति दधातु ॥ १ ॥

ओ पृषदश्वा मरुतः पृश्निमातरः शुभं यावानो विदथेषु जग्मयः ॥ अग्निर्जिह्वा मनवः सूरचक्षसो विश्वे नो देवा अवसाऽऽगमन्निह ॥२॥

इत्थंभूताः मरुतो देवाः अवसा अनेन हविर्लक्षणेनाहूताः सन्तः इह नः अस्मान् आगमन् आगच्छन्तु किं भूताः मरुतः पृषदश्वाः पृषतो हरिता अश्वाः येषां ते पुनः किं भूताः शुभं यावानः शुभं कर्तुं जनान् ये यान्ति ते शुभंयावानः पुनः किं भूता विदथेषु जग्मयः गमनशीलाः ये अग्निजिह्वा हुतभोक्तारश्चतुर्दशमनवस्ते च इहागमन् ये च सूरचक्षसः आदित्यदर्शनाः विश्वेदेवास्ते च इह गमन् ॥ २ ॥

ओं भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः ॥ स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेमहि देवहितं यदायुः ॥ ३ ॥

४

हे देवाः कर्णेभिः कर्णाभ्यां भद्रं अनुकूलं वयं शृणुयामः अक्षभिरक्षिभ्यो भद्रं पश्येम देवाः किं भूताः यजत्राः यजनीयाः यजन्तं त्रायन्तइति वा किं च स्थिरैरङ्गैर्दृढैः शरीरावयवैः तुष्टुवांसस्तुवन्तो

वयं अर्थात् भवतः देवहितं यदायुः जीवनं तनूभिर्व्यशेमहि व्यश्नुवीमहि तनूभिः भार्यापुत्रपौत्रतनूभिः सह देवहितं देवेन हितं स्थापितं शतवर्षान्तमित्यर्थः ॥ ३ ॥

ओं शतमिन्नु शरदोऽ अन्ति देवा यत्रा नश्चक्रा जरसं तनूनाम् ॥ पुत्रासो यत्र पितरो भवन्ति मा नो मध्या रीरिषतायुर्गन्तोः ॥ ४ ॥

हे देवाः शरदः शतमपि अर्थात् आयुः अन्ति अन्तिके स्वल्प कालमेवेत्यभिप्राय. यतः एवमतो ब्रूयुः नः अस्माकं आयुर्मध्या मध्ये मा रीरिषत मा हिंसिष्ट किं च गन्तोः गंतृ मा भवन्त्वित्यध्याहार्यं अकालिनएव मा गच्छन्त्वित्यर्थः यत्र शरदां शतन्नोऽस्माकं तनूनां जरसं जरां चक्रं कृतवन्तः जरानिमित्ताम्शक्तिमपि कृतवन्तः अर्थात् भवन्त एव किं च यत्र शरदः शते युवासः पुत्राः पितरो भवन्ति पुत्राः अग्नयस्ते यजमानजनिता भवन्ति हितकारिणश्च भवन्ति अथ वा पुत्राएव पितॄणामौर्द्धदैहिकं कुर्वाणाः पितरो भवन्ति पोषकत्वात् पितरइव भवन्ति तथा च यस्यामश्वस्थायामेवमत्रमता भवति सा मध्येव माऽस्त्वित्यभिप्रायः तदुक्तं सञ्चिन्त्य सञ्चिन्त्य तमुग्रदण्डं मृत्युं मनुष्यस्य विचक्षणस्य ॥ वर्षासु सिक्ताइव चर्मदण्डाः सर्वे प्रयत्नाः शिथिलो भवन्ति ॥ ४ ॥

ओं अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः ॥ विश्वे देवाऽअदितिः पञ्चजनाऽ अदितिर्जातमदितिर्जनित्वम् ॥५॥

द्यौः स्वर्गः अदितिः अस्तु न विद्यते दितिः खण्डनं यस्याः सा अदितिः अविघ्नकारिणी भवत्वित्यर्थः एवं सर्वत्रान्वयः पञ्चजनः कुवेरः किं बहूनां जातमुत्पन्नप्राणिजातं जनित्वं जनिष्यमाणं सर्वमदितिरेव यद्वाऽदितिर्मन्त्रेण नोच्यते द्यौरित्यादीनि सर्वाणि जनित्वान्तानि अदितिः अदितीनि अदीनानि महाभाग्ययुक्तानि सन्तु ॥ ५ ॥

ॐ अपोऽअद्यान्वचारिषꣳ रसेन समसृक्ष्महि॥
पयस्वा नग्नऽआगमं तं मा सꣳ सृज वर्चसा
प्रजया च धनेन च ॥ ६ ॥

हे अग्ने यत् अपः अद्य अन्वचारिषं अनुचरितवानस्मि अवभृथादावित्यर्थः यज्जलस्य रसेन वयं समसृक्ष्महि संसृष्टाः अयञ्च पयस्वान् पयो युक्तः सन् अत्राहमागमं आगतवानस्मि अतस्त्वं मा मां वर्चसा तेजसा संसृज संयुक्तं कुरु प्रजया पुत्रादिना धनेन च संसृज ॥ ६ ॥

ॐ द्यौः शान्तिरन्तरिक्षꣳ शान्तिः पृथिवी
शान्तिरापः शान्तिरोषधयः शान्तिः ॥
वनस्पतयः शान्तिर्विश्वे देवाः शान्तिर्ब्रह्म
शान्तिः सर्वꣳ शान्तिः शान्तिरेव शान्तिः
सा मा शान्तिरेधि ॥ ७ ॥

द्यौरित्यादिषु सर्वत्र विभक्तिव्यत्ययः तथा च या दिवि शान्तिः

या अन्तरिक्षे शान्तिः सा शान्तिः सा मां प्रति एधि भवतु ॥ इति अनुघ्नविरचितायां मन्त्रार्थदीपिकायां दशकर्मपरिच्छेदः ॥ ७ ॥

अथ नवग्रहमन्त्रव्याख्यानम् ।

इमं दे॒वाऽ असपत्न॒ꣳ सु॒वध्वं महते क्ष॒त्राय॑ महते ज्यैष्ठ्या॑य महते जान॑राज्या॒येन्द्र॑स्ये-न्द्रि॒याय॑ ॥ इ॒मम॒मुष्य॑ पु॒त्रम॒मुष्यै॑ पु॒त्रम॒स्यै वि॒शऽए॒ष वो॑ऽमी॒ राजा॒ सोमो॒ऽस्माकं॑ ब्राह्म॒णाना॒ꣳ राजा॑ ॥ १ ॥

आकृष्णेनेति देवपूजाया मुक्तम्, हे देवाः इमं राजानं असपत्नं शत्रुरहितम् सुवध्वं जनयन्त महते क्षत्राय महते ज्यैष्ठ्याय ज्येष्ठत्वाय महते जानराज्याय जनसम्बन्धिराज्याय इन्द्रस्य इन्द्रियस्य इन्द्रियाय वीर्याय सुवध्वमिति सर्वत्रान्वेति इमं कं इमं अमुष्यं पुत्रं अर्थात् यस्य यजमानस्य पितुः अमुष्यै असुष्याश्च यजमानमातुः पुत्रं इमं यजमानमित्यर्थः अर्थात् सपत्नत्वादिकरणे हेतुमाह वः युष्माकं विशे विशः जनपदजातिः एष राजा अस्माकं ब्राह्मणानां पुनः अमी असौ सोमो राजा यद्वा हे कुरवः वः युष्माकं पुनः ब्राह्मणानां अमी सोमो राजा तस्मादुभवदर्थं प्रार्थना क्रियते न तु स्वार्थमित्यभिप्रायः ॥ १ ॥

ओ अ॒ग्निर्मू॒र्द्धा (दि॒वः) क॒कुत्पति॑ः पृथि॒व्याऽअ॒यम् ॥ अ॒पाꣳ रेता॑ꣳसि जिन्वति । २ ॥

अग्निः स्तूयते योयमग्निः दिवः मूर्द्धा आदित्यात्मना द्युलो-

कस्य मूर्द्धा भवति अयमेव ककुत् महान् ककुत् एति महन्नामसु पठितम् अन्तलोंपे कृते एतद्रूपं, अयमेव महानात्मागत इत्यर्थः अयमेवाग्निः पृथिव्याः पतिः ईश्वरः तापपाकप्रकाशादिभिः सर्वाः प्रजाः अनुगृह्णातीत्यभिप्रायः किं च यमेव अपां रेतांसि जिन्वति रेतः कारणमुच्यते याऽएता आपः द्युलोकात्पतन्ति तासां आपां कारणानि जिन्वति, जिन्वति प्रीतिकर्मा पुष्यतीत्यर्थः आहुतिपरिणामेन सा वृष्टिर्जनयति इति दर्शितम् यद्वा अयमिति कुत उच्यते कुजोऽपि दिवीमूर्द्धेत्यर्थः तेन कुजप्रकाशात्तस्य सम्भवति । २ ।

ओं उद्बुध्यस्वाग्ने प्रति जागृहि त्वमिष्टापूर्ते सꣳसृजेथामयं च ॥ अस्मिन्त्सधस्थेऽअध्युत्तरस्मिन् विश्वे देवा यजमानश्च सीदत ॥ ३ ॥

हे अग्ने उद्बुध्यस्व उद्बुद्धो भव सुप्रकाशो भव एनं यजमानं प्रति जागृहि त्वं जागरणशीलश्च भव ततस्त्वेष्टापूर्ते सृजेथां अर्थात् यजमानेन सह अयं च अयं यजमानोऽपि इष्टापूर्त्ताभ्यां संसृष्टो भवत्विति शेषः, इष्टं यागादि, पूर्तं तडागादि, यद्वा अयं बुधः तथा च अयं बुधोप्युद्बुद्धो भवत्वित्यर्थः तेन बुधप्रकाशकतास्य मन्त्रस्य भवति ततः अस्मिन् सधस्थे सहस्थाने देवैः समानस्थाने आदित्यलोके विश्वेदेवा यजमानः सीदत सीदतु तथा यजमानस्य विश्वेदेवः समानलोकता प्रार्थ्यते आदित्यलोके किं भूते अध्युत्तरस्मिन् सर्वोत्कृष्टे । ३ ।

बृहस्पते ऽअति यदर्यो ऽअर्हाद् द्युमद्विभाति क्रतुमज्जनेषु ॥ यद्दीदयच्छवस ऽऋतप्रजात तदस्मासु द्रविणं धेहि चित्रम् ॥ ४ ॥

हे बृहस्पते ऋतात् सत्यात् प्रजापतेः सकाशात् प्रजातं प्रकृष्टं जातं जन्म यस्य इति ऋतप्रजातः तद्द्रविणं अस्मासु धेहि आधेहि धारय यजमानेषु स्थापय देहीत्यर्थः द्रविणं किं भूतं चित्रं नाना विधं तत्किं यत् धनं अति अतिशयेन अर्य्यः ईश्वरः अर्हात् पूजयेत् यच्च द्युमत् द्युतिमत् विभाति शोभते यत् जनेषु क्रतुमत् यज्ञवत् अभीष्टजनकत्वेन विभाति यच्च शवसः शवसा बलेन दीदयत् दीप्यते यज्ञस्य रक्षितारो भवन्तीत्यभिप्रायः ॥ ४ ॥

ओं अन्नात्परिस्रुतो रसं ब्रह्मणा व्यपिबत् क्षत्रं पयः सोमं प्रजापतिः॥ ऋतेन सत्यमिन्द्रियं विपानꣳ शुक्रमन्धस ऽइन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु ॥ ५ ॥

प्रजापतिः प्रथमशरीरी परिस्रुतो अन्नात् अन्यस्य हविर्लक्षणस्य रसं परिस्रुतः स्वधायाश्च रसं ब्रह्मणा त्रयीलक्षणेन व्यपिबत् विविच्य पीतवान् पयः सोमं च व्यपिबत् वशीचकार क्षत्रं च व्यपिबत् अत्र पानं शरीरकरणं सर्वमेतत् सतं अनेन चरितेन तत्सत्यं सञ्जातं यत्सोमं इन्द्रियं वीर्यं सञ्जातं किं भूतं वीर्यं विपानं लोहितात् विविक्तं यद्वा विपानं पानयोग्यं एवं च अन्धसः अन्नस्य शुक्रं

रेतो भिन्नं अन्नात्संभूतमित्यर्थः अथ इदं पय इन्द्रस्य इन्द्रियं अमृतं मधु च भवतु, शन्नो देवीरिति श्राद्धे व्याख्यातम् ॥ ५ ॥

ओं कया॑ नश्चि॒त्रऽआभु॑वदू॒ती स॒दावृ॑धः॒ सखा॑॥
कया॒ शचि॑ष्ठया वृ॒ता ॥ ६ ॥

चित्रः वापनीयः इन्द्रः कया ऊत्या केन तर्पणेन नः अस्माकं सदा वृधः सदाकालं वर्धयिता सखा च अभवत् भूयात् कया च आवृता कर्मणा सदावृधः सदाकालं वृधः पिता, सखा च सहायश्च आभुवत् आभिमुख्येन भवति तथा वृता वर्त्ततइति वृत् तया वृता वर्त्तमानया किं भूतया शचिष्ठया 'शचीति कर्मनाम' अतिशयेन शची शचिष्ठा यथा अतिशयितकर्मवत्या कीदृश इन्द्रः चित्रः विचित्रः पूज्यो वा । ६ ॥

ओं के॒तुं कृ॒ण्वन्न॑के॒तवे॒ पेशो॑ मर्या॒ऽअपे॒शसे॑ ॥
समु॒षद्भि॑र जायथाः ॥ ७ ॥

हे केतो कं केतवे अज्ञानाय केतुं ज्ञानं कृण्वन् कुर्वन् न विद्यते केतुः ज्ञानं यस्य स केतुः हविर्दहन्ति ते उषन्तोऽग्निहोत्रकर्त्तारो यजमाना अपेशसे अरूपाय मर्याः मर्याय मनुष्याय पेशः रूपं कृण्वन् एवं शुभशरीरः सन् उषद्भिः उषोभिः तस्मै अकेतवे अज्ञानाय समजायथ उत्पन्नोऽसि ॥ इति नवग्रहमन्त्राः । ७ ।

अथाधिदेवतानां मन्त्राः । त्र्यम्बकं यजामहे इति नीलसूक्ते व्याख्यातः, श्रीश्चत इति उत्तरनारायणसूक्ते व्याख्यातः ॥

ओं यदक्रन्दः प्रथमं जायमान उद्यन्त्समु-
द्रादुत वा पुरीषात्। श्येनस्य पक्षा हरिणस्य
बाहू उपस्तुत्यं महि जातं ते अर्वन् ॥ ८ ॥

हे अर्वन् अश्व ते तव महि महत् उपस्तुत्यं स्तवहेतुः तत् संजातं काविव श्येनस्य पक्षाविव लुप्तोपममेतत् हरिणस्य बाहू बाहूइव अत्र बाहूशब्देनाग्रचरणद्वयमुच्यते तथा च यथा पक्षाभ्यां श्येनः प्रस्थानाय शीर्येण न गच्छति तेन तौ तस्य स्तुतिहेतू एवं च तथा तवापि तत्प्रथमं जायमानः सन् अक्रन्दः शब्दमकरोः अश्वमेधे कर्मणि साधुत्वेन विशिष्टसाधनमहमित्येवं प्रकारेण किं कुर्वन् समुद्रात् अन्तरिक्षात् उदधेर्वा उद्यन् उद्गच्छन् अथ वा पुरीषात् जलात् पशोः सकाशाद्वा उत्पद्यमानः । विष्णोरराट मिति पूजायां व्याख्यातम् ॥ ८ ॥

ओं आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायतामा-
राष्ट्रे राजन्यः शूर इषव्योऽतिव्याधी महारथो
जायतां दोग्ध्री धेनुर्वोढाऽनड्वानाशुः सप्तिः
पुरन्धिर्योषा जिष्णू रथेष्ठाः सभेयो युवाऽस्य
यजमानस्य वीरो जायतां निकामे निकामे
नः पर्जन्यो वर्षतु फलवत्यो नऽओषधयः
पच्यन्तां योगक्षेमो नः कल्पताम् ॥ ९ ॥

हे ब्रह्मन् अस्य नः अस्माकं यजमानस्य राष्ट्रे देशे ब्राह्मणः वर्चस्वी आजायतां ब्राह्मवर्चसं वेदस्तदस्यास्तीति ब्रह्मवर्चस्वी वेदवानित्यर्थः आजायतामिति आब्रह्मन्नित्यत्र सम्बध्यते वेदसाध्या सर्ववैदिकक्रियाइति प्रथमं सा एवास्य किं च राजन्यः क्षत्रियः शूरः आजायतां, इषव्यः इषुसु कुशल, अतिव्याधी अत्यन्तं शत्रुव्यधमनशीलः महारथश्च आजायतां, महारथः रथेन जितः शत्रूनित्यादिप्रतिवादिनः किं च यजमानस्य राष्ट्रे इति सर्वत्रान्वेति अनड्वान्वृषभो वोढा वहनशीलो जायताम् सप्तिरश्वः आशुः शीघ्रगामी जायताम् योषा स्त्री पुरन्धिः पुरं शरीरं सर्वगुणसम्पन्नं दधाति पुरन्धिः रथे तिष्ठन्तीति रथेष्ठाः क्षिप् सप्तम्या अलुक्, रथे स्थितो नरो युयुत्सुर्नरो जिष्णुः जयनशीलो युवा जायतां युवा आ अस्येति पदच्छेदः अस्य यजमानस्य युवा समर्थः सभेयस्सभायां योग्यो वीरः पुत्रो जायतां, सभायां साधुः,सभेयः, 'ढश्छन्दसीति सभाशब्दात्तत्र साधुरित्यर्थे ढप्रत्ययः तस्य यादेशः किं च नः अस्य यजमानस्य निकामे निकामे देशे देशे पर्जन्यः मेघः अभिवर्षतु किं च ओषधयः यवाद्याः फलवत्य, पच्यन्तां किं च योगः क्षेमश्च कल्पतां भवतु, अलब्धलाभो योग, लब्धस्य परिपालनं क्षेमः स क्लृप्तो भवत्वित्यर्थः ॥ ९ ॥

ओं स॒जोषा॑ऽइन्द्र॒ सग॑णो म॒रुद्भि॒ः सोमं॑ पिब वृत्र॒हा शू॑र वि॒द्वान् ॥ ज॒हि शत्रूँ॒१॥ऽरप॒ मृधो॑ नुद॒ स्वाथाभ॑यं कृणुहि वि॒श्वतो॑ नः ॥ १० ॥

हे इन्द्र यस्त्वं सजोषाः समानपात्रभोजनः अर्थात् देवैः सह तं त्वां ब्रवीमि मरुद्भिः सह सगणः समानगणः भूत्वा मिलित्वा सोमं पिबत अतस्त्वं वृत्रहा वृत्रनाशको भविष्यसि हे शूर विद्वान् जानानः त्वं सोमं पीत्वा शत्रून् वृत्रप्रमुखान् जहि मारय अप-मृधः संग्रामात् अपनुदस्व क्षिप युद्धं निवर्त्तयेत्यर्थः अर्थात् हताव-शिष्टान् शत्रून् पलायनार्थं प्रेरयस्व एवं रिपुं विनश्याथानन्तरं नः अस्माकं विश्वतः सर्वत्र अभयं कृणुहि कुरु ॥ १० ॥

असि॑ य॒मो ऽअ॑स्यादि॒त्यो ऽअ॑र्व॒न्नसि॑ त्रि॒तो गुह्ये॑न व्र॒तेन॑ ॥ असि॒ सोमे॑न स॒मया॒ विपृ॑-क्तऽआहुस्ते॒ त्रीणि॑ दि॒वि बन्ध॑नानि ॥ ११ ॥

हे अर्वन् अश्व त्वं यमोऽसि आदित्योऽसि त्रितः त्रिस्थानात् इन्द्रस्य त्वमसि केन निमित्तेन गुह्येन व्रतेन प्रकृष्टेन कर्मणा यज्ञे-नेति यावत् किं च त्वं सोमेन सह समया मध्येन विपृक्तः संपृक्तः व्यक्तिभिन्नः सौमाङ्कतो भिन्नइत्यर्थः. तथा च ते तव दिवि स्वर्गे त्रीणि बन्धनात् ऋग्यजुः सामात्मकत्रयीलक्षणानि आहुः वदन्ति ब्रह्मवादिनइति शेषः एवमश्वः स्तूयते, कार्षिरसि इति कातीय-स्नानप्रकरणे व्याख्यातम् । ११ ॥

चित्रा॑वसो स्व॒स्ति ते॑ पा॒रम॑शीय ॥ १२ ॥

चित्रावसुशब्देन रात्रिरुच्यते, रात्रिर्वैचित्रावसुरितिश्रुतेः, हे चित्रावसो रात्रे स्वस्ति कुशलमस्तु स्वस्त्या च ते पारं समाप्तिं अशीय व्याप्नवानीत्यर्थ., अथप्रत्यधिदेतानां मन्त्राः,अग्निं दूतमिति व्याख्यातम् देवपूजायाम् ॥ १२ ॥

ओंअ॒प्स्व॑न्तर॒मृत॑म॒प्सु भे॑ष॒जम॒पामु॒त प्रश॑स्तिष्वश्वा॒

भव॑त वाजिनः ॥ दे॒वी॑रापो॒ यो॑ व॑ऽऊ॒र्मिः

प्रतू॒र्त्तिः क॒कुन्मा॑न्वाज॒सास्तेना॒यं वाज॑ꣳ सेत् ॥ १ ॥

अश्वानभिषिञ्चति अप्सु अन्तः मध्ये अमृतं अवस्थितं वर्त्तते अप्सु भेषजं अन्तः अवस्थितं वर्त्तते हे अश्वाः तेन यूयं वाजिनः अन्तरभवत वाजमन्नं उत पक्षान्तरे अपां प्रशस्तिषु प्रशस्तेषु भागेष्वपि भवत किं च हे देवी आपः यो वः ऊर्मिः सनुयात् कल्लोल. तेनायमश्वो वाजमन्नं सेत् सम्भजेत यद्वा सनुयात् बध्नीयात् सिनोतेर्वा एतद्रूपम् लिङ्, कल्लोलः किं भूतः प्रतूर्तिः प्रकर्षेण त्वरणशीलः ककुन्मान् उन्नत उन्नतो वृषस्कन्धप्रदेशः तत्तुल्यत्वात् ककुच्छब्देनोन्नत उच्यते वहुभिरुदकैः ऊर्ध्वतरत्यर्थः, वाजसा वाजभक्ताः वाजमन्नं तस्य दाता ॥ १ ॥

ओंस्यो॒ना पृ॑थिवि नो भवानृक्ष॒रा नि॒वेश॑नी ॥

यच्छा॑ नः॒ शर्म॑ स॒प्रथाः॑ ॥ २ ॥

हे पृथिवि नः अस्माकं स्योना सुखरूपा भव अनृक्षरा च भव, न विद्यते ऋक्षरो यस्या सा अनृक्षरा ऋक्षरः कण्टकः निवेशनी च भव साध्ववस्थितिर्भवेत्यर्थः, यच्छा नः शर्म सप्रथा नः अस्माकं शर्म शरणं यच्छ त्वं किं भूता सप्रथा नः पृथुं कुरु, इदं विष्णुरिति श्राद्धप्रकरणे व्याख्यातम् ॥ २ ॥

ओंत्रा॒तार॒मिन्द्र॑मवि॒तार॒मिन्द्र॒ꣳ हवे॑ हवे

सु॒हव॒ꣳ शूर॒मिन्द्र॑म् ॥ ह्वया॑मि श॒क्रं पु॑रुहू॒त-

मिन्द्र॑ꣳ स्व॒स्ति नो॑ म॒घवा॑ धा॒त्विन्द्रः॑ ॥ ३ ॥

अतो हेतो हे इन्द्रं ह्वयामि किं भूतमिन्द्रं त्रातारं यत पुनः किं भूतं अवितारं अनपकर्माणं हवे हवे आह्वाने आह्वाने सुहवं शोभनाह्वानं शूरं विक्रान्तं शक्रं पुरुहूतं बहुभिराहूतम् पुरुशब्दो बहुवचनः स इन्द्रः नः अस्माकं स्वस्ति धातु दधातु पुनः किं भूतः इन्द्रः मघवा मघं धनं तद्वान् ॥ ३ ॥

ओंनियुत्त्वान्वायवागह्ययᳪ शुक्रोऽ
यामि ते ॥ गन्तासि सुन्वतो गृहम् ॥४॥

हे वायो यतः सुन्वतः अभिषवं कुर्वतः जनस्य गृहं गन्तासि अतः त्वां ब्रवीमि नियुत्वान् गुणवान् भूत्वा आगहि आगच्छ अयमपि शुक्रो अद्वः ते त्वां प्रति अयामि आगच्छतु वचनव्यत्ययः छान्दसः तथा च शुक्रादीनां ग्रहाणां त्वमेव स्वामित्यभिप्रायः ॥४॥

ओंप्रजापते न त्वदेतान्यन्यो विश्वा रूपाणि
परिता बभूव ॥ यत्कामास्ते जुहुमस्तन्नोऽ
अस्त्वयममुष्य पिताऽसावस्य पिता व्वयᳪ
स्याम पतयो रयीणाᳪ स्वाहा ॥ ५ ॥

हे प्रजापते त्वत् त्वत्तः अन्यः देवताविशेषः एतानि विश्वा रूपाणि विश्वानि सर्वाणि रूपाणि कर्तुं शक्तो न बभूवेत्यर्थः अतः यत्कामा वयं ते त्वां जुहुमः नः अस्माकं तदस्तु किं च तेन असावस्य पितेति यथा यथमेव नामग्रहः, यथाऽसौ दशरथोऽस्य रामस्य पितेति सर्वथा सपुत्रा वयं रयीणां धनानां पतयः स्याम भवेम । ५ ॥

नमोऽस्तु सर्पेभ्यो ये के च पृथिवीमनु ॥ येऽअ-
न्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः ॥६॥

तेभ्यः सर्पेभ्यो नमोऽस्तु ते के ये केचन पृथिवी अनुपृथिव्यां ये च अन्तरिक्षे ये च दिवि स्वर्गे सन्ति तेभ्यः सर्वेभ्यः नमः. आदरार्थं पुनर्ग्रहणम् ॥ ६ ॥

ओं ब्रह्म जज्ञानं प्रथमं पुरस्ताद्विसीमतः
सुरुचो वेनऽआवः ॥ स बुध्न्याऽउपमाऽ
अस्य विष्ठाः सतश्च योनिमसतश्च विवः ॥७॥

ब्रह्म आदित्यरूपं प्रथमं पुरस्तात् प्राच्यां दिशि जज्ञानं जायते ततोऽगत्त्वपरं सीमतः मर्यादातः मध्यस्थानात्सुरुचः सुरोचमानान् इमान् लोकान् स्वप्रकाशेन वि आवः व्यावः व्याप्नोति वितता-न्करोति सबुध्न्याइति स एवादित्यः बुध्न्ता उपमाः दिशः व्याप्नोति बुध्नमन्तरिक्षं तत्र भव बुध्न्याः उपमोयन्ते आसु स्थितानि भूतानि इत्युपमास्च योनिं प्रभवं विवः प्रकाशयति, वृणोतेः अपि लुप्ते लङि गुणे च वइति रूपं अडभाव आर्षः ' बहुलं छन्दस्यमा-ङ्योगेपीति वचनात्. दिशउच्यन्ते दिशः किं भूता विष्ठाः अस्य जगतः विष्ठा विविधं तिष्ठंत्यस्यामिति विष्ठाः किं च सतः वि द्यमानस्य असतः अमूर्तस्य योनिं स्थानं अमूर्तस्याप्रत्यक्षस्य वाय्वा-देः आदित्यः किं भूतः वेनः कान्तो मेधावी वा एवं दिशः लोकं भूतानि वा आदित्यएवाभिव्यनक्ति मान्यइति सूर्यः स्तूयते । अथ लोकपालानां मन्त्राः, त्रातारमिति व्याख्यातम् । अग्निं दूतमित्यपि इमम्मेइत्यपि, असि यमइत्यपि । ७ ।

एष ते निर्ऋते भागस्तं जुषस्व स्वाहा ॥८॥

हे निर्ऋते देव एषः ते तव भागः तं भागं जुषस्व स्वाहा सु हुत मस्तु ॥ ८ ॥

व्वातो वा मनो वा गन्धर्वाः सप्तविंशतिः ॥ तेऽअग्रेऽश्वमयुञ्जंस्तेऽअस्मिञ्जवमादधुः ॥९॥

अश्वं युनक्ति वा शब्दः समुच्चयार्थः हे अश्व स ते त्वां सुमन्तु-रित्यध्याहार्यं स ते के वातो वा मनश्च गन्धर्वाः सप्तविंशतिश्च नक्ष-त्राणीत्यर्थः त्वयि जवं च दधातु तत्र हेतुः ते अग्रे प्रथमं अश्वम युञ्जन् रथे योजितवन्तः ते हि अस्मिन् जवं वेगं आदधुः आहित-वन्तः तथा च वातादयः एव पूर्वमश्वमयुञ्जन् तएव तत्र वेगं आदधुः अतस्तएव तत्र भवन्तः युंजन्तु ते च त्वमिमं जवं आदधुः इति वाक्यार्थः ॥ ९ ॥

ओं कुविदङ्ग यवमन्तो यवं चिद्यथा दान्त्यनु पूर्वं वियूय ॥ इहेहैषां कृणुहि भोजनानि ये बर्हिषो नमऽउक्तिं यजन्ति ॥ १० ॥

कुविदिति बहुधेने हे सोम यथा यवमन्तः बहुयवसम्पन्ना कृषीवलाः गृहीतयवाः केचित् जनपदाः यवं वितर्क्यं दान्ति लुन-न्ति दाप्लवने लट्, किं कृत्वा अनुपूर्वं अनुपूर्वेण वियूय पृथक्कृत्य निश्चित्येत्यर्थः एवं इह एषां यजमानानां यवएव भोज्यानि वस्तूनि कृणुहि कुरु केषां ये बर्हिषो बर्हिषउपरि स्थिताः यजमाना नमः

उक्तिं यजन्ति नम अन्नं हविर्भक्षणं गृहीत्वा उक्तिं योग्यां स्वाहादिकां विधाय यजंति यागं कुर्वंति ॥ १० ॥

तमीशानं जगतस्तस्थुषस्पतिं धियं जिन्वमवसे हूमहे वयम् ॥ पूषा नो यथा वेदसा मसद्वृधे रक्षिता पायुरदब्धः स्वस्तये ॥ ११ ॥

तथा तं ईशानं रुद्राधिपतिं अवसे अवनाय तर्पणाय वयं हूमहे आह्वयामः ईशानं किं भूतं जगतः जंगमस्य तस्थुषः स्थावरस्य च पतिं पालकं किं धियं जिन्वं धिया बुध्या जिन्वति प्रीणाति धियं जिन्व यद्वा कर्मणा जिन्वति तथा कथं युवां नः अस्माकं पूषा सूर्यः वेदसां धनानां वृधे वर्धनाय असत् भूयात् किं च अदब्धः अनुपहिंसित सन् रक्षिता भवतु पायुः पुत्रादीनां पालयिता च भवतु स्वस्तये च भवतु ॥ ११ ॥

नमोऽस्त्विति व्याख्यातम्. ब्रह्मजज्ञानमिति च ।

विश्वकर्मन्हविषा वर्द्धनेन त्रातारमिन्द्रमकृणोरवध्यम् ॥ तस्मै विशः समनमन्त पूर्वीरयमुग्रो विहव्यो यथासत् ॥ १२ ॥

हे विश्वकर्मन् अग्ने अनेन हविषा महादूतोपलक्षणेन वर्द्धनेन वर्द्धयित्रा वा त्वं इन्द्रं त्रातारं जगत् स्रष्टारं अवध्यं हन्तुमशक्यं अप्रतिभटं च अकृणोः कृतवानसि तस्मै चैवं भूतरूपायेन्द्राय पूर्वीः पूर्वे विशः मनुष्याः वसिष्ठप्रभृतयः समनमन्त सम्नताः इदानीं नताः अपि च यथा यतः पञ्चम्यर्थे थाल्प्रत्ययः यतः कारणात् अयमिन्द्रः

उग्रः उद्गोर्णवच. वज्रो वा विहव्यः असत् अभवत् विविधे षु क्रा- येषु आह्वयतइति विहव्यस्तस्माद्रविःसामर्थ्यात् इन्द्रस्यायं प्रभाव इत्यभिप्राय: ॥ १२ ॥

इति दशदिग्पालदेवतामन्त्रा व्याख्याताः, अथ विनायकादि- पञ्चकस्य मन्त्रा व्याख्यायन्ते गणपतिदुर्गावायुाकाशान्यश्विनौ चेति, वातो वेति तिस्र ऋचो व्याख्याताः ॥

ऊर्द्ध्वाऽअस्य समिधो भवन्त्यूर्द्ध्वाशुक्रा शोचींष्यग्नेः ॥ द्युमत्तमा सुप्रतीकस्य सूनोः ॥ १३ ॥

अस्याग्नेः प्रजापतिरूपस्य ऊर्ध्वानि देवमार्गगामिन्यः समिधो भवन्ति शोचींषि अर्चींषि किं भूतानि ऊर्ध्वा उर्ध्वानि शुक्रा शुक्लानि शुभ्रानि भवन्ति किं च द्युमत्तमानि विश्वप्रकाशकानि अग्नेः किं भूतस्य सुप्रतीकस्य सूनोः सुप्रतीकस्य सुमुखस्य अर्थात् यज- मानस्य सूनोः पुत्रस्य जातस्य सत्पुत्रमग्निं धारयति एवं भूतं वह्निं स्तुवति इति वाक्यशेषः ॥ १३ ॥

अश्विनोर्भैषज्येन तेजसे ब्रह्मवर्चसायाभिषिंचामि ॥ १४ ॥

भिषक् वैद्यस्तस्य कर्म भैषज्यं अश्विनोः अश्वनीकुमारयोः भैषज्येन भिषक्कर्मणा त्वामभिषिञ्चामि किमर्थं तेजसे ब्रह्मणे ब्रह्म- वर्चसाय वेदाय ॥ १४ ॥

इति विनायकपञ्चकमन्त्रव्याख्या, अथ चन्द्रप्रकाशकाः ।

अषाढं युत्सु पृतनासु पप्रिं स्वर्षामप्सां वृजनस्य गोपाम् ॥ भरेषु जां सुक्षितिं सुश्रवसं जयन्तं त्वामनु मदेम सोम ॥ १५ ॥

हे सोम जयन्तं त्वां अर्थात् परसैन्यं अनुमदेम उत्साहयामः त्वां किं भूतं अषाढं असहनं अनभिभूतं वा युत्सु युद्धे सुपृतनासु सेनासु पप्रिं परिपालयितारं पृपालनपूरणयोरित्यस्यैवैतद्रूपं स्वर्षां स्वः स्वर्गं सनोतीति स्वस्तं स्वर्षां अप्सां अपां सन्नियन्तारं वृजनस्य बलस्य गोपा गोप्तारम् ।

भरेषुजां जयतेरेतद्रूपं संग्रामजेतारं सुक्षितिं सुनिवासं सुश्रवसं कल्याणकर्तृत्वेन प्रसिद्धम् ॥ १५ ॥

ओं सोमो धेनुं सोमो अर्वन्तमाशुं सोमो वीरं कर्मण्यं ददाति । सादन्यं विदथ्यं सभेयं पितृश्रवणं यो ददाशदस्मै ॥ १६ ॥

सोमस्तस्मै धेनुं ददाति आशुं शीघ्रं गतिमन्तमश्वं च सोमएव वीरं पुत्रं ददाति किं भूतं पुत्रं कर्मण्यं कर्मसु साधु सादन्यं सदने गृहे साधुं विदथ्यं यज्ञे साधुं सभेयं सभायां पितृश्रवणं पितुरनुशासने स्थितं विनीतं तस्मै कस्मै अस्मै सोमाय यः यजमानः ददाशत् ददाति ॥ १६ ॥

ओं त्वमिमा ओषधीः सोम विश्वास्त्वमपो अजनयस्त्वं गाः । त्वमाततन्थोर्वन्तरिक्षं त्वं ज्योतिषा वितमो ववर्थ ॥ १७ ॥

हे सोम इमाः विश्वाः सर्वा ओषधीस्त्वं अजनयः जनयसि त्वमपस्त्वं गाश्च जनयसि त्वं उरु विस्तीर्णमन्तरिक्षं आततंथ त्वं विततवानसि त्वं ज्योतिषातमः ववर्थ विहृणोषि आदित्यात्मना सर्वं तमोऽपनयसीति सर्वात्मा त्वमित्यर्थः, अतस्त्वमेवापनयसीति स्तुतिः ॥ १७ ॥

ओं देवेन नो मनसा देव सोम रायो भागꣳ सहसावन्नभियुध्य ॥ मा त्वा तनदीशिषे वीर्यस्योभयेभ्यः प्रचिकित्सा गविष्टौ ॥ १८ ॥

४

हे देव सोम हे सहसावम् बलवन् देवेन मनसा देवसंबन्धिना मनसा सह रायो धनस्य भागं अभि युध्य युध्यति गतिकर्मणां मध्ये पठ्यते अंतर्भावितण्यर्थो गृह्यते तेन अभियुध्य अभिगमय देहीत्यर्थः एवं दानप्रवृत्तं त्वां मा कश्चित् आतनत् प्रतिबध्नीयात् तनतिः प्रतिबन्धार्थः कुतस्त्वमेवमुच्यते इति चेत् यतस्त्वं वीर्यस्य स्वकीयवीरकर्मणः ईशिषे ईश्वरोसि किं च उभयेभ्यः उभयलोकप्राप्त्यर्थं प्रचिकित्सा व्याध्यपगमं कुरु गविष्टौ च गोशब्देनात्रामुष्यलोक उच्यते तथा च स्वर्गैषणायां विषयभूतायां त्वमस्मान् प्रचिकित्स यथा स्वर्गं यास्याम तथा कुर्विति वाक्यार्थः ॥१८॥ इति श्रीमहामहोपाध्यायश्रीप्रद्युम्नविरचितायां मंत्रार्थदीपिकायां नवग्रहादिमंत्रव्याख्यानपरिच्छेदः समाप्तः ॥ अथ ज्ञानकाण्डमिदानीं प्रस्तूयते सुशिष्यं गर्भाधानादिभिः संस्कारैः संस्कृतशरीरमधीतवेदमुत्पादितपुत्रं यथाशक्त्यनुष्ठितमपापं निस्पृहं यमनियमवन्तं अतिथिपूजापनीतकल्मषं मुमुक्षुमुपपन्नं पुत्रवत्शिष्यमत्राह ॥

ओं ईशा वास्यमिदꣳ सर्वं यत्किञ्च जग-

४

त्यां जगत् ॥ तेन त्यक्तेन भुञ्जीथा मा गृधः

कस्य स्विद्धनम् ॥ १ ॥

ईश ऐश्वर्ये क्विपि तृतीयान्तस्यैतद्रूपं सर्वमिदं ईशा तेनावास्यं वासनीयं आच्छादनीयं ममेदमित्यनेन ज्ञानेनेति,शेषः वसआच्छादन इत्येतद्रूपं इदमिति प्रत्यक्षतो निर्दिशति यत्किञ्चिदिति यत् शब्दो भिन्नक्रमः तथा च न पुनरेतत् प्रत्यक्षगोचरमात्रं किं च यत् जगत्यां पृथिव्यां जगत् जंगमादि स्वस्वामिसंबन्धाभिगीतं वर्तते तत्सर्वमेव तथा च तेन ममताज्ञाने न सर्वेण त्यक्तेन स्वस्वामिसंबन्धेन च त्यक्तेन सता भुंजीथाः भोगानीतिशेषः अतश्च मा गृधः ममेदमिति बुध्व। 'गृधु अभिकांक्षायां, अकांक्षा न तत्र हेतुमाह कस्य स्विद्धनमिति स्विदिति निपातो वितर्कवचनः कस्य पुनरेतद्धनं न कस्य चिदपीत्यभिप्रायः सर्वार्थानि हि वस्तून्युत्पद्यन्ते तथा हि स्त्रियं पतिरन्यथाभुंक्ते अन्यथा पुत्रः अन्यथा पित्रादिः एवं च कटककेयूरान्दीन्यलङ्करणानि अन्यं चान्यं च पुरुषमुपतिष्ठमानानि साधारणान्येव असाधारणान्येव ममताबुद्धिर्भवितुमर्हतीत्यभिप्रायः तथा च सर्वार्थेषु वस्तुषु यः स्वस्वामिसम्बधी समेदमिति बुद्धिश्च मा अविद्या तन्निवृत्तौ स्पृहानिवृत्तिः निस्पृहस्य च योगेऽधिकार इति वाक्यार्थः ॥ १ ॥

ओं कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳ समाः ।

एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे ॥

४

निःस्पृहस्यापि योगिनो ज्ञाननिमित्ते कर्मण्यधिकार इत्येतद्दर्शनार्थमाह मुक्तिसाधनानि कर्माणि इह लोके शतं समाः जिजीविषेत् जिजीविषेदिति पुरुषव्यत्ययः कार्यः पुरोवर्तिविषयत्वादस्य मंत्रस्य जिजीवितुमिच्छुः- योगोचितपथ्याहितभक्षणेन शतं समाः इति पुरुषायुषोपलक्षणार्थं च एवं त्वयि तव मुक्तिरस्तीतिशेषः नान्यथेतोऽस्ति इतः प्रकारात् अन्यथा मुक्तिर्नास्तीत्यर्थः यथा स्वर्गप्राप्तेर्नानाप्रकाराः सन्ति तथा नात्रेत्यर्थः ननु कर्मणः कर्मफलेन भवितव्यं तत्कथं मुक्तिरित्याशंक्याह-न कर्म लिप्यते नरे नहि मुक्त्यर्थं कर्मक्रियमाणं नरे मनुष्ये लिप्यते सम्बध्यते मुक्तिप्रदानेनोपक्षीणगतित्वादित्यर्थः ॥ २ ॥

कामिनीनिन्दार्थमंत्रमाह

असुर्या नाम ते लोका अन्धेन तमसाऽऽवृताः ॥
ताँस्ते प्रेत्यापि गच्छन्ति ये के चात्महनो
जनाः ॥ ३ ॥

अत्र परमात्मस्वरूपमजानन्तो देवादयोऽपि असुरा उच्यन्ते तेषां स्वभूताः असुर्याः नामशब्दोऽनर्थको निपातः लोक्यंते भुज्यंते कर्मफलान्यत्रेति लोकाः स्वर्गादयः तथा च असुर्याः असुरसम्बधिनः ते प्रसिद्धाः लोकाः स्वर्गादयः अंधेन तमसा अज्ञानलक्षणेन तमसा वृताः सर्वतआच्छादिताः तान् लोकान् ते जनाः प्रेत्यापि मृत्वापि गच्छन्ति ते के ये के जनाः आत्महनः काम्यकर्मकर्तारः आत्मानं हि ते घ्नन्ति ये स्वर्गादिप्राप्तिहेतुभूतानि कर्माणि कुर्वन्ति ते हि जनित्वात् म्रियन्ते मृत्वावजायन्त इत्येवं मृदन्तं विनाशं प्राप्नुवन्ति ।

इदानीमारभ्य यमनियमवन्तं मुमुक्षुणं यथाभूतं परं ब्रह्म तत्वेनोपास्यं तदाह ।

ओं अनेजदेकं मनसो जवीयो नैनद्देवाऽआप्नुवन्पूर्वमर्शत् ॥ तद्धावतोऽन्यानत्येति तिष्ठत्तस्मिन्नपो मातरिश्वा दधाति ॥ ४ ॥

अनेजत् स्थिरं तत्वरूपमास्ते एकमद्वितीयं विज्ञानघनरूपेण मनसो जवीयः मनस्तावच्छीघ्रतरं भवति तस्मादपि शीघ्रतरप्रसाददामेनेति शेषः नैनं देवाऽआप्नुवन्पूर्वमर्शन् वेगवन्मनसोऽपि प्रथममगच्छत् एनत् एतत् देवाः प्राणाः न आप्नुवन् सूक्ष्मत्वात् एतत् किं भूतं पूर्वं सर्वस्य कारणत्वेनादिभूतम् पुनः किं भूतं अर्षत् अविनश्यत् स्थितिहिंसार्थः अनादिनिधनइत्यर्थः तद्धावतोन्यान् मनोवागग्न्द्रियप्रभृतीन् अत्येति अतिक्रामति तिष्ठदेव स च अतिक्रम्य गच्छतां व्यापकत्वादित्यर्थः तस्मिन्नपइति अपः कर्माणि मातरिश्वा वायुः तस्मिंन्कर्माणि दधाति स्थापयति मातरि अन्तरिक्षे श्वसितीति मातरिश्वा, समिष्टयजुषि वायौ सर्वाणि यज्ञदानहोकर्माणि स्थाप्यन्ते स्वाहा वातेधाः इति वायुप्रतिष्ठात्वाभिधानात् समष्टिव्यष्टिरूपोहि सावित्ति स वायुरपि यस्मिन् कर्म्माणि स्थापयति यागहोमदानानां परमं निधानमित्यर्थः ॥ ४ ॥

एवं कारणरूपमात्मानमुद्दिश्याथेदानीं कार्यरूपेणोपदिशति

ओं तदेजति तन्नैजति तद्दूरे तद्वन्तिके ॥ तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः ॥५॥

तदेव सर्वकार्यरूपेणावस्थितं सत् एजति क्रिया बभूवति 'एजृ कंपने, तदेव नैजति क्रियावन्नवति स्वस्य रूपेणावस्थितं भवति तद्दूरे वर्षकोट्यप्यविदुषामप्राप्यत्वात् दूरइव तद्वदन्तिके उशब्दएवकारार्थः तदेव चांतिके समीपे अत्यन्तविदुषामात्मतत्वज्ञानं सुलभे अथ वा तत् दूरे आदित्यनक्षत्रादिरूपेण तदेवांतिके पृथिव्यग्न्यादिरूपेण सर्वं खल्विदं ब्रह्मेत्येतद्दर्शनार्थोयं ग्रंथ तदनन्तरस्य सर्वस्य तदेवास्य प्राणिजातस्य विज्ञानघनरूपेणांतः अन्तर्वर्ति तदेवास्य प्राणिजातस्य बाह्यतः जलरूपेण शरीररूपादिनाऽवतिष्ठते चेतनाचेतनरूपमनं तं ब्रह्मेत्यर्थः ॥ ५ ॥

यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति ॥
सर्वभूतेषु चात्मानं ततो न विचिकित्सति ॥

यस्तु सर्व्वाणि भूतानि आत्मन्येवानुपश्यतीति तु शब्दो माया पेक्षया व्यावर्त्तनार्थः यः पुनः सर्व्वाणि भूतानि चेतनाचेतनरूपाणि आत्मन्येवानुपश्यति आत्मैवेति पश्यति भूतानि न सद्व्यतिरिक्तानि किं तु अहमेवपरं ब्रह्मसर्व मिति पश्यति सर्वभूतेषु चात्मानं सद्व्य तिरिक्तं न किं चिदनुपश्यति स ततो न विचिकित्सति न विचारे प्रवर्तते एवं पश्यतो हि योगिनः पदं ब्रह्मरूपाध्यात्मविज्ञानघनानं दैकत्ववेदिनः कुतो विचारः प्रवर्त्तताम् ततोनिरन्तरात्यन्तविशुद्धात्म दर्शनात् न जुगुप्सतेति । ६॥ ननु शोकमोहौ दृश्येते तत्कथमेकत्व सुपपद्यते आत्मनो नानात्वे हेतौ संभवतइत्यतआह ॥ ६ ॥

यस्मिन्त्सर्वाणि भूतान्यात्मैवाभूद्विजानतः ॥
तत्र को मोहः कः शोकऽएकत्वमनुपश्यतः ॥ ७

यस्मिन्नवस्थाविशेषे सर्वाणि चेतनाचेतनानि आत्मैवाभूत् आत्मैव भवति न भिन्नानि अतो 'वेद सर्वं खल्विदं ब्रह्मेति' जानन्ति तस्मिन्नवस्थाविशेषे तद्विजानतः पुरुषस्य योगिनः को मोहः कः शोकः न कोऽपीत्यर्थः हेतुमाह एकत्वमनुपश्यतः तथा च श्रद्धा चित्तस्य शास्त्रविहितैकत्वदृष्टे रात्मनो नानात्वाभावं निर्णीतवतः तथा शोकमोहहेत्वभावात् कथं शोकः कथं वा मोहइत्यर्थः ॥७॥ अथ व्यपगतरागद्वेष विचिकित्सस्य कर्मवत् एकत्वमनुपश्यत किं भवतीत्यतआह ॥

ओं स पर्यगाच्छुक्रमकायमव्रणमस्नाविरꣳ शुद्धमपापविद्धम् ॥ कविर्मनीषी परिभूः स्वयम्भूर्याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यः समाभ्यः ॥ ८ ॥

एवं भूतात्मज्ञस्य फलमाह यमिति यएवमात्मानं पश्यति स तं पर्यगात् परिगच्छति तं किं भूतं शुक्रं शुक्लं निर्मलं विज्ञानघनानन्दस्वभावं अचिन्त्यशक्तिं अकायं न विद्यते कायशरीरं यस्य अकायः अव्रणं क्षतशून्यम् कायरहितत्वादेव अस्नाविरं स्नायुरहितम् अकायरहितत्वादेव शुद्धं सत्वरजस्तमोऽभिरनुपहतं अपापविद्धं क्लेशकर्मविपाकाशयैः पापैरसंस्पृष्टं अकायमव्रणमस्नायुरित्यर्थं पुनरुक्तमपि न दोषाय अभ्यासे भूयांसमर्थं मन्यन्तइत्यनेन तथा च एतादृशं ब्रह्मैव प्रतिपद्यतइत्यर्थः, अथात्मोपासनस्य फलमाह कविर्मनीषीत्यादि यश्च कविः क्रान्तदर्शनः आत्मोपासनायुक्तः स

याथातथ्यतोऽर्थान् व्यदधात् यथास्वरूपमर्थान् विहितवान् त्यक्तस्व स्वामिसम्बन्धैरर्थैरुपभोगं कृतवान् शाश्वतीभ्यः अनन्तवर्षप्राप्तये च कृतवानित्यध्याहार स किं भूतः मनीषी मनसासूक्ष्माणामर्थानां विशेषज्ञः परिभूः परिसर्वतो भावेन ज्ञानवान् भवतीति परिभूः स्वयम्भूः तेन रूपेण भविता अवस्थितः ननु यः कर्माविष्टो लोकः सोऽन्तराले भवति तत्कथं प्राप्तिरिति चेत्सत्यम् आत्मसंस्कारजनक कर्म ब्रह्मभाजकं भवति तस्मात्सोऽपि परिगच्छति शुक्रमकायम व्रणमिति ॥ ८ ॥

ओं अन्धं तमः प्रविशन्ति ये सम्भूतिमुपासते ॥
ततो भूयऽइव ते तमो यऽउसम्भूत्या᳚ रताः ॥ ९

तत्र प्रथमं लोकायतिका निन्द्यन्ते येषामेतद्दर्शनं जलबुद्बुदवज्जनाः मदशक्तिविज्ञानमिति ये असंभूतिं उपासते मृतस्य सतः सम्भवो जन्म नास्ति शरीरादस्मान्मुक्तिरेव न हि विज्ञात्मा कश्चित् अथ वृत्तिधर्मोऽस्ति यः शरीरान्तरेण सम्बध्यते एवं यउपासते ते अन्धं तमः अज्ञानलक्षणं तमः प्रविशन्ति ते पुनः ततोऽपि बहुतरं तमः प्रविशन्ति, इवशब्दोऽनर्थकः उकारोऽवधारणार्थः तथा च ये सम्भवन्त्यात्मेव रताः सम्भूतिरात्मा आत्मैवास्ति नान्यत् किं च तत्कर्मज्ञानयोः कर्मकाण्डज्ञानकांडयोर्वा सम्बन्धो नास्त्येवेति येषामभिप्रायइत्यर्थः ॥ ९ ॥

ओं अन्यदेवाहुःऽ सम्भवादन्यदाहुरसम्भवात् ॥
इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे ॥ १० ॥

अन्तो बुद्धिफलं नाना विभावयन्ति तदाह सम्भवात् आत्म ज्ञानात् अन्यदेव फलं माह आत्मज्ञानवतां उत्कृष्टं फलमित्यर्थः अन्यच्च फलं असम्भवात् असम्भवपरिज्ञानादाहुः इति शुश्रुम वयं श्रुतवन्तः धीराणां वचांसि के धीरास्ते ये न. अस्माकं तत् ब्रह्म विचचक्षिरे आख्यातवन्तः ॥ १० ॥

ओं सम्भूतिं च विनाशं च यस्तद्वेदोभयं सह॥
विनाशेन मृत्युं तीर्त्वा सम्भूत्या ऽमृतमश्नुते॥ ११॥

समस्तस्य जगतः सम्भवहेतुं संभूतिं ईश्वरं परं नाशं च विनाशिशरीरे चैतत्ज्ञानहेतुत्वेन यो वेद जानाति आत्मज्ञानोत्पत्तिहेतुकर्माणि करोतीति यावत् सविनाशं नाविनाशिना शरीरेण मृत्युं संसारं तीर्त्वा उत्तीर्य संभूतः आत्मपरिज्ञानेन अमृतत्वं अश्नुते प्राप्नोति केवलं ज्ञानमेव नार्थसिद्धये किं तु कर्मापीत्याह ॥ ११ ॥

ओं अन्धं तमः प्रविशन्ति ये ऽविद्या-
मुपासते ॥ ततो भूय ऽइव ते तमो यऽउ
विद्यायांᳫं रताः ॥ १२ ॥

ते अज्ञानलक्षणं तमः प्रविशन्ति ये अविद्यां स्वर्गार्थानि कर्माणि उपासते अनुतिष्ठन्ति ते ततोऽपि भूयः बहुतरं तमः प्रविशन्ति ये विद्यायामेव रताः उकार एवकारार्थः आत्मज्ञानएव रताः त्यक्तकर्माण इत्यर्थः ॥ १२ ॥

ओं अन्यदेवाहुर्विद्याया ऽअन्यदाहुरविद्यायाः ॥ इति शुश्रुम धीराणां
ये नस्तद्विचचक्षिरे ॥ १३ ॥

सन्तः विद्यायाः आत्मज्ञानात् अन्यदेवफलं आहुः अविद्यायाः कर्मणः अन्यच्च फलमाहुः इति शुश्रुम इति व्याख्यातम् ॥ १३ ॥

विद्यां चाविद्यां च यस्तद्वेदोभयंꣳ सह ॥ अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ॥ १४ ॥

विद्यां चात्मज्ञानं च अविद्या च कर्म च यस्तदुभयं सह वेद एकी भूतं जानाति ज्ञानातिशयेन कर्मकांडं ज्ञानकांडस्य गुणी भूतं जानातीत्यर्थ. एककार्यकारित्वमेकत्वमिह विवक्षितम् सोऽपि विद्यया कर्मकांडेन मृत्युं तीर्त्वा उत्तीर्य विद्यया परब्रह्मज्ञानेन अमृत मोक्ष अश्नुते प्राप्नोति । १४ ॥

इदानीमित्थं कृतब्रह्मोपासनस्य योगिनः शरीरपातोत्तरं यद्भवति तदाह ।

ओं वायुरनिलममृतमथेदं भस्मान्तꣳ शरीरम् ॥ ओं क्रतो स्मर, क्लिबे स्मर, कृतꣳ स्मर ॥१५॥

अत्र वायुग्रहणं सप्तदशकलिंगोपलक्षणार्थम् वायुः प्राणवायुः अनिलं स्वकीयां प्रक्रियां भजतइतिशेषः कं अनिलं अमृतं यो न विनश्यति तं अन्तःशरीरचारी वायुः प्राणः स्वभावेनावतिष्ठती अथापगतप्राणस्य शरीरस्य कथमवस्थानमित्यतआह अथेदं भस्मान्तं शरीरं भवतीत्यध्याहार्य्यम् मुक्तस्य पुनः शरीरसम्बन्धो न भवतीति ध्वनितम् अथ संचरतो यस्य विशिष्टस्थानप्रतिपत्त्यर्थमग्नावाग्नयेऽवस्थानं भवति यस्य वायुरनिलममृतमथेदं भस्मान्तं शरीरं भवति तं आत्मानं ओंमिति आमन्त्रयते क्रतो संकल्पात्मक हे कर्त्तः स्मर क्लिबे स्मर क्लिबे कल्प्यते भोगायेति क्लृप्लोकः तस्मै स्मर जगा-

देवमार्ष: "छन्दस्युभयथेति" पदान्तत्वात् अयं लोको दातव्यस्तस्मै कृताय लोकाय कर्म कृतं स्मर कर्मकृतमित्यभ्यास आदरार्थं पुनरनेन मन्त्रेण मार्गं याचते ॥ १५ ॥

ओं अग्ने नय सुपथा राये ऽ अस्मान्विश्वानि देव वयुनानि विद्वान् ॥ युयोध्यस्मज्जुहुराणमेनो भूयिष्ठान्ते नम ऽउक्तिं विधेम ॥ १६ ॥

हे अग्ने अस्मान् सुपथा शोभनमार्गेण नय प्रापय राये धनाय यज्ञफलाय किं च हे देव दानादिगुणयुक्त विश्वानि सर्वाणि वयुनानि प्रज्ञानानि धेहि मयीति शेषः, त्वं किं भूतः विद्वान् सर्वं जानानः न हि तव ज्ञानशक्तीनां परिमाणमस्तीत्यभिप्रायः किं च अस्मत् अस्मत्तः पापं युयोधि पृथक् कुरु 'जुषमिश्रणे' एनः किं भूतं जुहुराणं कुटिलीकर्तुमिच्छति 'हृच्छकौटिल्ये सन्नन्तः हृच्छतेः सनोलुक् लोपश्चेति शानच्प्रत्ययः तथा च क्रियासु हृच्छतुमिच्छति कुटिलकर्तुमिच्छति यत् एनः अभिलषति मम क्रियाप्रतिबन्धकं यत्पापं तदित्यर्थः तत्र हेतुमाह भूयिष्ठान्ते नम उक्तिं विधेम ते तव भूयिष्ठां बहुतमां नम उक्तिं विधेम करवाम नमइत्यन्ननाम उक्तिर्भणनं तथा च नमः हविर्लक्षणेनोपस्थितेन यत् पुरोऽनुवाक्या याज्यावचनं सा नमः उक्तिः तामित्यर्थः ॥ १६ ॥

आदित्यं प्रार्थयते

ओं हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् ॥ योऽसावादित्ये पुरुषः सोऽसावहम् ॥ १७ ॥

हिरण्मयेन पात्रेण ज्योतिर्मयेनेति यावत् स्वार्थे मयट् सत्यस्यादित्यमण्डलान्तर्वर्तिनः पुरुषस्य मुखं स्वरूपं अपिहितं वर्त्तते अतो न दृश्यतइति यावत् अतः हे पूषन् तथा तेन प्रकारेण द्वारमपावृणु पुरुषेऽपि प्रकाशं कुरु यथा योऽसौ आदित्ये पुरुषः सोऽसौ अहमिति पश्यामीति मण्डलान्तर्वर्त्ती पुरुषः सचामृतेन ज्योतिषाऽपिहितो न दृश्यते तत्र श्रुतिप्रमाणम् तथा हि "स एष एव मृत्युर्यऽएतस्मिन्मण्डले पुरुषोऽथैतदमृतं यदेतदर्चिर्दीप्यते तस्मान्मृत्युर्न म्रियते मृते ह्यन्तस्तस्माद् न दृश्यते मृते ह्यन्तरिति" तदुक्तम् हिरण्मयेन पात्रेणेत्यत्र, यच्चोक्तमनेजदेकमित्यतः प्रभृति तदेतद्ब्रह्मस्वभाकाशं प्रतिभाति ॥ १७ ॥ हलाधुधेऽमी उवटेऽपि चार्यास्ततो विधेयो मयि माऽवलेपः ॥ रत्नाकरे किं मणयो न सन्ति ततः समाकर्षति यः स धन्यः ॥ इति श्रीमहाराजाधिराजधर्मचन्द्रकारितमहामहोपाध्यायशत्रुघ्नकृतमन्त्रार्थदीपिकायां ज्ञानकाण्डव्याख्यानम् समाप्तम् ॥ १७ ॥

ॐ श्रीगणेशाय नमः । ततो मण्डलब्राह्मणस्य पठनं कात्यायनप्रणीतत्रिकण्डिकास्नानसूत्रपरिशिष्टे "मध्यान्हसन्ध्योपस्थाने" मण्डलब्राह्मणैरित्युपस्थाय प्रदक्षिणीकृत्योपविशेदित्यभिहितं तदेव सायनाचार्यकृतभाष्यसहितं प्रख्याप्यते ॥

अथ मण्डलब्राह्मणं लिख्यते ।

यु॒देतन्म॒ण्डल॒न्तपति त॒न्म॒हदुक्थ॒न्ता॒ऽऋ॒च॒ः॥

स॒ऽ ऋचां॑ लोको॒ऽ१ य॒ देत॒दर्चि॒र्द्दी॑प्यते

तन्महाव्रतं तानि सामानि ससाम्नां लोकोऽथ य ऽ एष ऽएतस्मिन्मंडले पुरुषः सोऽग्निस्तानि यजूंषि स यजुषां लोकः ॥ १ ॥

अथ मण्डलभाष्यं लिख्यते ।

सूर्य्यमण्डलार्चिः पुरुषत्रयस्याऽधिदैवाधियज्ञाऽध्यात्मपरत्वेनार्थउच्यते तत्राधिदैवमयमर्थः चयनगतबृहदुक्थमहाव्रताग्नित्रयं क्रमेण मण्डलार्चिः पुरुषरूपत्वेनोपासनीयमिति अधियज्ञमयमर्थः चयनगतरुक्मपुष्क पर्णहिरण्यपुरुषाणां मण्डलादित्रयरूपत्वेनोपासनं अथाध्यात्ममपि मण्डलादित्रयमेव दक्षिणाक्षिगतशुक्लकृष्णावर्णतदन्तर्वर्त्ति पुरुषाणां मण्डलादित्रयरूपत्वेनोपासनमिति लोचने हि शुक्लरूपं कृष्णरूपं चास्ति तदन्तर्वर्तिपुरुषश्च दृश्यते एतत्प्रसङ्गेन सव्यलोचनगतपुरुषस्य मिथुनत्वसम्पादनं अथ पुरुषस्य मृत्युत्वमुपजीव्य मृत्युगतैकत्वबहुत्वान्तिकदूरत्वमीमांसा तस्यैव पुरुषस्य बहुधोपासनं तत्फलमिति मण्डलब्राह्मणप्रतिपादितार्थसंग्रहः, अथाक्षरार्थो व्याख्यायते बृहदुक्थं मण्डलत्वेन ध्येयं एवं महाव्रतचित्याग्नी अर्चिः पुरुषात्मनाध्येयो वेदत्रयस्याग्निवायुसूर्यात्मकत्वेन त्रयो वेदा दैवतानीति वक्तुं प्रयुज्यते अतो मण्डलस्य बृहदुक्थद्वारा ऋग्वेदात्मत्वोपासनमिति उत्तरत्राधियज्ञपर्याये ऋक्सामादयो यज्ञावयवविशेषादिति नाध्यात्माधियज्ञयोस्तेषामुपास्यार्थता यन्महदुक्थं ता ऽऋचः सऽऋचां लोकः इति उक्थस्य ऋक्सङ्घातात्मकत्वात्तस्य च मण्डलात्मत्वोपासनादृचां लोकः ऋग्वेदरूपेण

मण्डलमुपासनीयं मंडलरूपेण वा ऋग्वेदउपासनीय. तदुभया त्मना महदुक्थमुपासनीयं उभयथा व्याख्यातत्वात् एवमुत्तरच म हाव्रतं सामात्मकं अर्चीरूपमिति सामवेदात्मना वाऽध्यानमर्चि ष: अग्निर्मण्डलस्य पुरुषरूप: अग्निश्च यजुर्मन्त्रसाध्यइति तस्य पुरुषस्योक्त्या यजुर्वेदात्मकत्वं एवमुक्थमहाव्रतचित्याग्नीनां मंड लार्चि: पुरुषात्मकत्वेन तस्य मंडलादित्रयस्य ऋग्यजु: सामरूप-त्वम् ॥ १ ॥

सैषा त्रय्येव विद्या तपति तद्धैतदप्यविद्वाꣳस आहुस्त्रयी वा एषा विद्या तपतीति वाग्घैव तत्पश्यन्ती वदति ॥ २ ॥

त्रयी वेदत्रयमेव तपति जगदर्थे लोकसम्मतिमाह तद्धै तदप्य-विद्वांसऽआहुरिति ह प्रसिद्धं अविद्वांसोऽप्येतदाहुरेषा त्रय्येव विद्या तपतीति तदुक्तमर्थस्वरूपं पश्यन्ती पर्यालोचयन्ती वाग्वदति त्र-य्येव विद्या तपति । २ ।

स ऽएषऽ एव मृत्यु:, य्यँ ऽ एषऽ एतस्मिन्मण्डले पुरुषोऽथैतदमृतं यदेतदर्च्चिर्द्दीप्यते तस्मान्मृत्युर्न म्रियतेमृते ह्यन्तस्तस्माद् न दृश्यतेऽमृते ह्यन्त: ॥ ३ ॥

अथमंडलस्थपुरुषस्य मृत्युरूपत्वमर्चिषोऽमृतरूपत्वञ्चाह ।

यऽ एष उएतस्मिन्मण्डले पुरुष: स मृत्यु: यत एतदर्चिर्द्दीप्यते तदमृतं यतोऽमृते मरणरहिते अर्च्चिषि अन्तर्मध्ये वर्त्तते अतो

मृत्युर्न म्रियते नहि अमृतं मध्यवर्त्ती विनश्यति तस्यापि विनाशे ऽमृतत्वप्राप्तिरुत्तमफलत्वेनोपन्यसितुमयुक्तेति तात्पर्य्यं अन्तर्वर्त्तित्वमेव विशदयति तस्माद् न हृश्यते ऽमृते ह्यन्तरिति मृत्युरूपः पुरुषोऽमृतरूपेऽर्चिष्यन्तर्वर्त्तते इत्युक्तोऽर्थे अर्चिराश्रयमंडलस्य पुरुषाधिष्ठितत्वम् । ३ ॥

तदेष श्लोको भवत्यन्तरं मृत्योरमृतमि-
त्यवरꣳ ह्येतन्मृत्योरमृतं मृत्यावमृतमाहि-
तमित्येतस्मिन्हि पुरुष एतन्मण्डलंप्रतिष्ठितं
तपति मृत्युर्व्विवस्वन्तं व्वस्तऽइत्यसौ वाऽ
आदित्यो व्विवस्वानेष ह्यहोरात्रे व्विवस्ते
तमेष व्वस्ते सर्व्वतो ह्यनेन परिवृतो मृत्यो
रात्मा व्विवस्वतीत्येतस्मिन्हि मण्डलऽएतस्य
पुरुषस्यात्मैतदेष श्लोको भवति ॥ ४ ॥

पुरुषार्चिषोरुभयोर्यस्य तमेव प्रतिष्ठेत्येतस्मिन्नर्थे मन्त्रं सँवादयति तदेष श्लोको भवतीति श्लोको मन्त्रः पादबद्धत्वसाम्यात् मन्त्रपाठस्त्वेवं अन्तरं मृत्योरमृतं मृत्यावमृतमाहितं मृत्युर्विवस्वन्तं वस्ते मृत्योरात्मा विवस्वतीति अयमर्थः मृत्योः पुरुषस्यामृतममृतरूपार्चिरधिकरणंमण्डलं अन्तरं अवतरं तदपेक्षया परस्तात् मृत्यौ पुरुषे अमृतममृतरूपार्चिरधिकरणं मण्डलमाहितं प्रतिष्ठितं विवस्वन्तं अहोरात्रे विवासयति इदमहरेषा रात्रिरिति विभजति पुनः पुनः

करोतीति वा विवस्वानादित्यमण्डलमित्यर्थः तन्मृत्युं वस्ते आच्छादयति सर्वतः स्वतेजसा परिवृणोति मृत्योः पुरुषस्यात्मा विवस्वति मण्डले प्रकाशते इति अत्र वेदान्तिनो मण्डलस्थपुरुषईश्वर इति मण्डलं केवलं न तपति किं तु तन्मध्यवर्त्तिपुरुषतेजसेति प्रतिपादयन्ति ईश्वरः स च मृत्युरूपत्वं अतस्तद्धर्मोपदेशात् ज्योतिषाभावाच्च अत्र चराचरग्रहणात् इत्येतैरधिकरणैः अत्रापि तन्मतानुसारेण मण्डलवर्त्तिनः पुरुषस्य मृत्युरूपत्वं मण्डलं च तेनाधिष्ठितं तस्य च मण्डलमेव प्रतीतिः स्थानत्वेन प्रतिष्ठेति पूर्वमुक्तं मन्त्रं प्रतिपाद्यमनूद्य व्याचष्टे 'अन्तरं मृत्योरमृतमित्यवरं ह्येतन्मृत्योरमृतमित्यादिना' अवरं अधस्तादित्यर्थः सिद्धः अनेनामृतमध्यवर्त्तित्वमुक्तमित्यर्थः द्वितीयपादगतामृतं यदेतदर्चिरधिकरणं मण्डलमुच्यते तत्पुरुषप्रतिष्ठितं तपति तेन सहितस्य मण्डलस्य जगत्प्रकाशकत्वमस्ति तृतीयपादगतं विवस्वत्पदं निर्वक्ति एष ह्यहोरात्रे विवस्ते इति' एतेन विवस्वता सर्वतः परिवृतो वेष्टितः चतुर्थपादं व्याचष्टे एतस्मिन्विवस्वति मण्डले पुरुषस्यात्मा प्रतीयते इति शेषः एतदेव श्लोको भवतीति निगमनम् ॥ ४ ॥

तयोर्व्वाऽएतयोः, रुभयोरेतस्य चार्च्चिषऽएतस्य च पुरुषस्यैतन्मण्डलम्प्रतिष्ठा तस्मान्महदुक्थम्परस्मै न शंसेत्, नेद्देता म्प्रतिष्ठाञ्छिनदानीत्येताᳬ ह स प्रतिष्ठाञ्छिनत्ति यो महदुक्थम्परस्मै शंसति तस्मा-

दुक्थशस भूयिष्ठं परिचक्षते प्रतिष्ठाच्छिन्नो हि भवतीत्यधिदैवतम् ॥ ५ ॥

तयोर्वा एतयोरित्यादेरयमर्थः यतः पुरुषार्चिषोर्मण्डलमेव प्रतिष्ठा अतो मण्डलरूपं महदुक्थं न परस्मै शंसेत् एतां प्रतिष्ठां न इतच्छिनदैनेदिति परिभवे न छिन्द्यामिति स्वप्रतिष्ठाया अन्याधानत्वे स्वयमप्रतिष्ठिताभवतीत्यर्थः तथा च बहुधा बृहदुक्थस्य परस्मै शंसननिषेधः 'ऐतरेयकोपनिषदि समाम्नायते तस्मादेव विद्वान परस्मा अग्निचिद्रूपान्न परस्मै महाव्रते न स्तुवीत न परस्मा एतदहः शंसेदिति' यतः परस्मै बृहदुक्थशंसनं निषिध्यते अतः उक्थशसं भूयिष्ठं परिचक्षते परस्मै शंसितारं होतारं लोके बहु निन्दन्ति यतः प्रतिष्ठा छिन्नो भवतीति मण्डलार्चिः पुरुषाणां बृहदुक्थ महाव्रताग्निहारेण ऋग्यजुः सामरूपत्वेनोपासनाच्च बृहदुक्थादीनां तादृक्मण्डलाद्यात्मनोपासनमित्यधिदैवतमर्थं उक्त्वा क्रतुसंपहरति इत्यधिदैवतमिति ॥ ५ ॥

अथाधियज्ञं यदेतन्मण्डल न्तपत्ययर्ठ॰ स रुक्मोऽथ यदेतदर्चिर्दीप्यतऽइद न्तत्पुष्करपर्ण मापो ह्येता ऽआपः पुष्करपर्ण मथ यऽ एष ऽएतस्मिन्मण्डले पुरुषोऽयमेव स योऽयर्ठ॰ हिरण्मयः पुरुषस्तदेतदेवैतच्च यर्ठ॰ सँस्कृत्येहोपधत्ते तद्यज्ञस्यैवानु सर्ठ॰ स्थामूर्ध्व-

मुत्क्रामति तदेतमप्येति यऽएष तपति तस्मादग्निं नाद्रियेत परिहन्तुममुत्र ह्येष तदा भवतीत्युऽ एवाधियज्ञम् ॥ ६ ॥

अधियज्ञं वक्तुं प्रतिजानीते अथाधियज्ञमिति अत्र रुक्मपुष्कर पर्णहिरण्मयपुरुषाणां मण्डलार्चिः पुरुषात्मनोपासनमित्यधियज्ञवाक्यस्य तात्पर्यं अक्षरार्थस्तु यन्मण्डलं तपति अयमत्रोपहितो रुक्मः यदर्चिर्दीप्यते तत् रुक्मपुरुषयोरधस्तादुपहितं पुष्करपर्णम् कथमर्चिषः पुष्करपर्णात्मत्वं तत्राह आपो ह्येता आपः पुष्करपर्णमिति अद्भ्यउपपन्नत्वात्तदात्मकमित्यर्थः मण्डलमध्यवर्त्ती पुरुषएवात्रोपसहितो हिरण्मयपुरुषः एतदुक्थादित्रयं मण्डलाद्यात्मना संस्कृत्य भावयित्वा महाग्नावुपधत्ते तदा यज्ञस्य संस्थां समाप्तिं अनु ऊर्ध्वं उत्क्रामति यजमानो यदा तत्तदा एतन्मण्डलादिरूपेण त्रिविधमादित्यं अप्येति प्राप्नोति यएष तपति यत्र कंचिद्धर्ममाह तस्मादग्निं नाद्रियेत परिहन्तुममुत्र ह्येष तदा भवतीति यतोऽस्मिन्नग्निं चितवान्चितमग्निमिष्टकाविशिष्टं नाशयितुमादरं कुर्यात् कुतः एषोऽग्निरमुत्र भवति परलोके यजमानशरीरात्मनोत्पद्यते इति यद्वा परिहन्तुं प्राप्तं स्पृष्टमित्यर्थः चित्याग्निस्पर्शने दोषश्रवणात् एवमधियज्ञमस्यार्थो व्याख्यातः ॥ ६ ॥

अथाऽध्यात्मं ॥ यदेतन्मण्डलं तपति यश्चैष रुक्मऽइदं तच्छुक्लमत्र यदेतदर्चिर्दीप्यते यच्चै तत्पुष्करपर्णमिदन्तत्कृष्णमत्र यऽएषऽ

एतस्मिन्मण्डले पुरुषो यश्चैष हिरण्मयः

पुरुषोऽयमेव स योऽयन्दक्षिणेऽक्षन्पुरुषः ॥७॥

अथाध्यात्मं प्रदर्श्यत इति शेषः अत्रायं विशेषः मण्डलादित्रयस्यायज्ञिकरुक्मपुष्करपर्णहिरण्मयपुरुषत्रयस्य च दक्षिणाक्षिगतशुक्लकृष्णवर्णद्वयतदन्तर्वर्तिपुरुषेषु तादात्म्येनोपासनमिति अक्षिति अक्षशब्दादनङ् 'सुपां सुलुगिति' सप्तम्या लुक् एवं मण्डलादित्रयस्य लोचनगतशुक्लादित्रयस्य च तादात्म्येन ध्यानमुक्तम् पुरुषस्य च द्वे चक्षुषी तत्र यथा दक्षिणे तथा सव्यलोचनेऽपि पुरुषो दृश्यते सोऽयं उक्तलक्षणदक्षिणाक्षिपुरुषस्य मिथुनत्वे सम्पद्यतआह । ७ ।

सऽएषऽएव लोकम्पृणा तामेष सर्वोऽग्निरभिसम्पद्यते तस्यैतन्मिथुनं योऽयꣳ सव्येऽक्षन्पुरुषऽर्द्धमु हैतदात्मनो यन्मिथुनं यदा वै सह मिथुनेनाथ सर्वोऽथ कृत्स्नः कृत्स्नतायै तद्यत्ते द्वे भवतो द्वन्द्वꣳ हि मिथुनं प्रजननन्तस्माद्द्वे द्वे लोकम्पृणेऽउपधीयेते तस्मादु द्वाभ्यां द्वाभ्यां स्तुतिं प्रगायन्ति ॥ ८ ॥

सऽ एषऽ एव लोकं पृणेति सः एव सूर्यमण्डलगतपुरुषएव लोकं पृणा इष्टका लोकं पृणेष्टकाया ऽऽदित्यात्मत्वं अष्टमकाण्डावसाने प्रतिपादितं तथाहि अथ लोकं पृणमुपदधात्यसौ वा आदित्यो लोकं पृणाथ ह्येमान् लोकान् पूरयत्यमुमेवादित्यमुप-

दधाति तां सूर्यात्मकलोकंपृणेष्टकामभिलक्ष्य सर्वोऽग्निः सम्पद्यते लोकं पृणाभिः सर्वोग्निः कृत्स्नः संतर्प्यतइत्यर्थः तस्य सूर्य्यपुरुषात्मकदक्षिणाक्षिपुरुषस्य सव्याक्षिगतः पुरुषो मिथुनं योषिदित एतन्मिथुनं हि आत्मनो यत्पत्नीति तैत्तिरीयश्रुतेः" यतः अर्द्धं स सव्याक्षिपुरुषो नातिरिक्तइत्यर्थः यदात्मापि मिथुनेन युक्तस्तदा सर्वं कृत्स्नः पूर्णं पुरुषद्वयं मिथुनात्मना स्तौति यत् यदा ते द्वे भवतस्तदा कृत्स्नतायै पूर्णत्वाय द्वे इति व्यत्ययेच्च नपुंसकलिंगत्वं यतः पुरुषयोर्द्वंद्वं मिथुनं प्रजननं प्रजोत्पादकं ततः सूर्यात्मिके लोकंपृणे द्वे द्वे उपधीयेते द्वयोर्दशस्तु वा मंत्रइति लोकं पृणोपधानं प्रस्तावे द्वंद्वश उपधानमुक्तं अथ या द्वितीया मिथुनं तदर्द्धं मु हैतदात्मनो यत्मिथुनं स यस्यां स्रक्त्यां प्रथमे उपदधाति ततो दशभिर्दशभिः संस्थापयतीति द्वित्वमेवान्यत्रापि दर्शयति तस्माद्वाभ्यामिति तस्मादेव द्वाभ्यां द्वाभ्यां यजुष्मतीलोकंपृणाभ्यां चितिं प्रणयंति ।८॥

स॒ऽ ए॒ष॒ऽ ए॒वे॒न्द्रो य॒ऽ यन्द॑क्षि॒णेऽक्षन्पु॒ रु॒षे॒ऽथे॒यमिन्द्राणी ता॒भ्यान्दे॒व॒ऽ ए॒तां व्वि॒धृ॒तिम॒कु॒र्व॒न्ना॒सिका॒ न्तस्मा॒ज्जा॒या॒याऽ अ॒न्ते ना॒श्नी॒या॒दु॒ व्वी॒र्य्य॒ वा॒न्हा॒स्मा॒ज्जायते व्वी॒र्य्य॒वन्तमु ह॒ सा॒ जनयति य॒स्या॒ऽ अ॒न्ते ना॒श्ना॒ति ॥९॥

यदुक्तमक्षिद्वयपुरुषद्वंद्वं मिथुनमिति तदेव स्त्रीपुल्लिङ्गैरिन्द्रेन्द्राणिशब्दाभ्यां विशदयति सऽएषऽएवेन्द्रइति दक्षिणाक्षिपुरुषः इन्द्रमुच्यते सव्याक्षिपुरुषइन्द्राणीत्युच्यते इन्द्रस्य स्त्री इन्द्राणी 'इन्द्रवरुण

भवेत्यादिना" भीषानुक्तौ ताभ्यां स्त्रीपुंसाभ्यां इन्द्राणीन्द्राभ्यां अर्थे पतां नासिकां विधृतिं व्यवधायकवस्त्रस्थानीयामकुर्वन्देवाः यतः स्त्रीपुरुषयोर्मध्ये देवविधृतिं कृतवन्तः अतो जायाया अन्ते नाश्नी-यात् स्त्रियाः समीपे स्वियं पश्यन् भोजनं न कुर्यादित्यर्थः स्त्री समीपभोजनाकरणस्य फलंदर्शयति वीर्यवान्हास्मादिति अस्मात्-स्त्रीसमीपभोजनमकुर्वतो वीर्यवान् सुतो जायते तस्याः समीपे न भुंक्ते सा उ ह साऽपिवीर्यवन्तमुत्पादयति ॥ ९ ॥

तदेतद्देव व्रत ॥ ठ॑ राजन्यबन्धवो मनुष्या-णामनुत्तमाङ्गोपायन्ति तस्मादु तेषु वीर्य-वाञ्जायतेऽमृतवाका व्यमसा ᳲ सा क्षिप्रश्येन-ञ्जनयति ॥ १० ॥

एतद्व्रतमनुतिष्ठतां वीर्यवत्पुत्रोत्पत्तिर्भवतीत्याह तदेतद्देव व्रतं राजन्यबन्धवइति यदुक्तं जायाया अन्ते नाश्नीयादिति तदेतद्दे वव्रतं देवकल्पितं व्रतं एतन्मनुष्याणां मध्ये राजन्यबन्धवो अनुत्तमां गो-पायन्ति अत्यर्थरहस्यत्वेन कुर्वन्ति तस्मात् उ तस्मादेव तेषु राज-न्यबन्धुषु वीर्यवान्पुत्रो जायते वयसां पक्षिणां मध्ये अमृतवाको नामकपक्षिजातिरेतद्व्रतं गोपायन्ति अतः सा क्षिप्रं शीघ्रगामिनं श्येनं श्येननामानं पक्षिणं जनयति ॥ १० ॥

तौ हृदयस्याकाशं प्रत्यवेत्य मिथुनीभवतस्तौ यदा मिथुनस्यान्तङ्गच्छतोऽथ हैतत्पुरुषः स्वपिति तद्यथा हैवेदं मानुषस्य मिथुनस्यान्तं

गत्वा संविदऽइव भवत्ये वर्ठं॰ हैवैतद संविद-
ऽइव भवति दै वऽ ह्येतन्मिथुनं परमो ह्येषऽ
आनन्दः ॥ ११ ॥

अथेद्रेन्द्राणीनाम्नोः स्त्रीपुरुषयोः संगमस्य स्थानतल्लक्षणानि
चाह तौ हृदयस्याकाशमित्यादिना तौ स्त्रीपुरुषौ हृदयाकाशं द-
हरं प्रत्यवेत्य प्राप्य मिथुनी भवतः हृदयं मिथुनीकर्म्मसंभोगं कुरुत-
इत्यर्थः तौ यदा मिथुनकर्मणोन्तमवसानं गच्छतस्तदानीमेव पुरुषो
जीवात्मा स्वपिति यथा निश्चितं इदमेव किं लोके मानुषस्य मि-
थुनस्यान्तं गत्वा असंविदंइव अजानन्निव पुरुषो भवति एवं तदा
तयोर्मिथुनभावे पुरुषोऽसंविदइव भवति विदेरिगुपधलक्षणः कः
प्रत्ययः न संवेत्तीत्यसंविदः हि यतः एतन्मिथुनं इन्द्रेन्द्राणीद्वंद्वं
दैवं देवनिर्म्मितं अतस्तयोर्मिथुनभावे परम आनन्दो भवति ११

तस्मादेवं वित्स्वपप्यात् ॥ श्लोक्यर्ठं॰ हैतेऽ एव
तद्देवते मिथुनेन प्रियेण धाम्ना समर्द्धयति
तस्माद्ध ह स्वपन्तम्धुरेव न बोधयेन्न देते
देवते मिथुनीभवन्त्यौ हिनमानीति तस्माद्ध
हैतत्सुषुपुषः श्लेष्मणमिव मुखं भवत्येतेऽएव
तद्देवते रेतः सिंचतस्तस्माद्रेतसऽइदर्ठं॰
सर्व्वर्ठं॰ सम्भवति यदिदङ्किञ्च ॥ १२ ॥

तस्मादिति तस्माद्धेतोः एव वित् इन्द्रेन्द्राण्योः स्वापे मिथुन-

कर्मणा यस्मानन्दो भवतीति जानन् स्वप्याम् शयीत एतच्छयनं लोकस्य स्वर्लोकप्रापकं ह यतः एवं जानतः एते एव देवते इन्द्रेन्द्राण्यौ समर्द्धयति केन मिथुनेन प्रियेण धाम्ना मिथुनकर्मणा परमानन्दयुक्तौ करोति अत्र कंचिद्धर्ममाह तस्मा दुह स्वपन्तं धुरे वेति यतः स्त्रीपुरुषयोर्मिथुनेन पुरुषः स्वपिति तस्मादेव स्वपन्तं स्वापं कुर्वन्तं धुरे पीड़ायै एव न बोधयेत् न प्रबुद्धं कुर्यात् धूर्वतेर्हिंसार्थात् क्विपि रालोपे रूपं अव एवार्थे यद्वा धुरादिव वेगेनैव प्रबोधयेत् इव एवार्थे अत्याहितकार्ये शनैः प्रबोधयेदित्यर्थः तत्र कारणं नेदेते देवते इति यदि सहसी प्रबोधस्तर्हि एते देवते इन्द्रेन्द्राण्यौ मिथुनी भवन्त्यौ न इत् नैव हिंसानि हिंसेर्लोटि उत्तमैकवचने रूपं हिनसानीति मनीषया सुप्तस्य सहसा प्रबोधनो न कार्यः तयोरिदानीं मिथुनीभावस्य लक्षणमाह तस्मादु हैतत्सुषुपुष इति तस्मात्तयोर्मिथुनभावेन पुरुषस्य भावः स्वपेः कृतं तस्य रूपं तस्मात्सुषुपुषः सुप्तवतो जनस्य मुखं श्लेषणं श्लेषायुक्तमिव भवति श्लेषमशब्दात्मत्वर्थे लोमादीत्यादनि पामादित्वान्न प्रत्ययः कुतो मुखस्य श्लेषयुक्तता तत्राह एते एव तद्देवते रेतः सिंचतः इति तयोर्देव तयो रेतः सेकात्सुप्तमुखं श्लेषयुक्तं तदाकारमिव भवतीत्यर्थः तस्माद्रेतसः सकाशात् इदं सर्वं विश्वं सम्भवति उत्पद्यते यदिदं किंच यत्किंचित्प्राणिजातम् ॥ १२ ॥

स॒ऽ ए॒ष॒ऽए॒व॒ मृ॒त्यु॒ः ॥ .य्यँ॒ऽ ए॒ष॒ऽ ए॒त॒स्मि॒न्म॒-

ण्ड॒ले॒ पु॒रु॒षो॒ .य॒श्चा॒यु॒न्द॒क्षि॒णे॒क्ष॒न्पु॒रु॒ष॒स्तस्य॒

हैतस्य हृदये पादावतिहतौ तौ हैतदाच्छिद्यो-
त्क्रामति स यदोत्क्रामत्यथ हैतत्पुरुषो म्रियते
तस्मादु हैतम्प्रेतमाहुराच्छेद्यस्येति ॥ १३ ॥

एवं प्रासंगिकं परिसमाप्य मण्डलस्थपुरुषात्मनोपासनीयस्य दक्षिणाक्षिपुरुषस्य मृत्युरूपत्वमाह स एष एव मृत्युरिति य एष एतस्मिन्मण्डले पुरुषो यश्च दक्षिणेक्षे पुरुषः स एष मृत्युरेव तस्यै तस्य दक्षिणाक्षिपुरुषस्य पादौ हृदये अतिहस्तौ व्याप्तौ कीलकीलितौ भवतः यदा स पुरुषः उत्क्रामति गच्छति तदा तौ पादावाच्छिद्य बलादादायोत्क्रामति स पादोत्क्रामति पुरुषशरीरात्तदाऽयमेव पुरुषो म्रियते तस्मादाच्छेद्यस्य शरीरस्य हृदयस्थौ पादावच्छिद्य गतस्तस्मादिमं प्रेतमित्याहुः प्रपूर्वादितेः क्तप्रत्यये रूपं प्रेत इति ॥ १३ ॥

एष उ एव प्राणः ॥ एष हीमाः सर्वाः
प्रजाः प्रणयति तस्यैते प्राणाः स्वाः स यदा
स्वपित्यथैनमेते प्राणाः स्वा अपियन्ति
तस्मात्स्वाप्ययः स्वाप्ययो ह वैतᳪ स्वप्न
इत्याचक्षते परोक्षं परोक्षकामा हि
देवाः ॥ १४ ॥

ननु कथमक्षिपुरुषनिर्गमे पुरुषस्य मरणं अनेकप्रमाणं प्रस्तुत्याम्नातं तस्मिन्नुत्क्रांते इत्यादिना ॥ प्राणनिर्गमनानन्तरमेव म्र-

रीरपातइत्याशंक्य तस्यैवाक्षिपुरुषस्य प्राणात्मतामाह एषऽएव प्राणइति एषोऽक्षिपुरुष एव प्राणः निर्वचनमाह हि यतः एष इमाः प्रजाः सर्वाः प्रणयति लोकोत्तरं प्रापयति तस्मादेष एव प्राणः तस्याक्षिपुरुषस्य प्राणरूपस्य एते प्राणापानादयः पंचप्राणाः स्वाः जातयः प्राणत्वेन समानजातोया इत्यर्थः सोऽक्षिपुरुषो यदा स्वपिति निलीयते तदा एते स्वाः प्राणा एवं अपियन्ति माप्नुवन्ति अनुलीयतेइत्यर्थ. स्वानामप्ययइति स्वाप्ययं स्वप्नइत्याचक्षते परोक्षेण यतो हि परोक्षकामा देवाः ॥ १४ ॥

सऽ एतैः सुप्तो न कस्य च न वेद न मनसा सङ्कल्पयति न वाचान्नस्य रसं विजानाति न प्राणेन गन्धं विजानाति न चक्षुषा पश्यति न श्रोत्रेण शृणोत्येतꣳ ह्येते तदा पीता भवन्ति सऽएषऽ एकः सन्प्रजासु बहुधा व्याविष्टस्तस्मादेका सती लोकंपृणा सर्व्वमग्निमनुविभवत्यथ यदेक ऽएव तस्मादेका ॥ १५ ॥

तस्मिन्सर्वेषां प्राणानामप्ययं विशदयति सऽएतैरिति स पुरुषः एतैः प्राणैः सह सुप्तः सन् कस्य चन कस्यापि न वेद न कंचन जानाति सामान्योक्तं विवृणोति न मनसेति संकल्पो नामाध्यवसायः वाचा रसनयाऽन्नस्य रसं न जानाति प्राणेन नासिकया गन्धं चक्षुषा न पश्यति श्रोत्रेण न शृणोति हि यतः एते मनआदयस्तदा एतं पुरुषमपीताः प्राप्ता भवन्ति वस्तुतस्तु एकस्यैवाक्षिपुरुषस्य ना

नाप्रजास्वावेशाद्बाहुल्यमित्याह स एष एकः सन् प्रजासु बहुधा व्याविष्टः प्रविष्टः तस्माल्लोकंपृणा सूर्यपुरुषात्मिका वस्तुतो जात्या एकापि सती सर्वमग्निमनुभवति व्याप्नोति अथ एतएव पुरुषस्त-स्मादेका लोकंपृणा ॥१५॥

तदाहुः, एको मृत्युर्बहवा३ इत्यग्निः कप्रश्च बहवश्चेति ह ब्रूयाद्यदहसावमुत्र तेनैको ऽथ यदिह प्रजासु बहुधा व्याविष्टस्तेनो बहवः ॥ १६ ॥

एवं मण्डलस्य पुरुषात्मनोपासनोयस्य दक्षिणाक्षिपुरुषस्य च मृत्युरूपत्वं प्राणरूपत्वं उक्तं तत्र जन्तोरेकत्वबहुत्वं चेति प्रश्नोत्तरा-भ्यामाह तदाहुरेको मृत्युरिति एको मृत्युर्बहवश्च बहवा इत्यत्र विचारार्थे श्रुतिः एकश्च बहवश्चेति वदेत् अर्हति स्फुटत्वे असौ अ-मुत्र लोके आदित्यमण्डलमध्यवर्ती पुरुष एकः इह भूलोके प्रजासु मनुष्यपश्वादिषु व्याविष्टस्तेन अतएवेशादेव बहवो मृत्यवः ॥१६॥

तदाहुरन्तिके मृत्युर्दूरा३इत्यके च दूरे चेति ह ब्रूयाद्यदहायमिहाध्यात्मं तेनान्तिके ऽथ यदसावमुत्र तेनो दूरे ॥ १७ ॥

तदाहुरन्तिकइति समीपदूरवर्तीत्ववानपि एवं व्याख्येयं यत्-इहाध्यात्ममयमक्षिपुरुषस्तेनांतिके समीपवर्ती यत्र अमुत्र द्युलोके ऽसौमण्डलस्थः पुरुषस्तेन तु दूरवर्तीति ॥ १७ ॥

तदेष श्लोको भवति ॥ अन्नेभात्यपश्रितो रसानाᳪ संचरे ऽमृत इति यदेतन्मण्डल

न्तपति तदन्नमथ य एष एतस्मिन्मण्डले पुरुषः सोऽत्ता स एतस्मिन्नन्ने पश्रितो भातीत्यधिदैवतम् ॥ १८ ॥

अथ मृत्योरनन्तत्वं मन्त्रं संवादपूर्वकमाह तदेष श्लोको भवतीति अन्ने भात्यपश्रितो रसानां संचरेऽमृतइत्येतावान् मन्त्रः तमेवश्लोकमधिदैवाध्यात्मपरत्वेन व्याचष्टे यदेतन्मण्डलं तपतीति यदेतज्जगत्प्रकाशकज्योतिर्मण्डलन्तदन्नं तन्मध्यवर्तीपुरुषो रसानां संचरे रसच्चरणवति अन्ने मण्डले अपश्रितः स्थितः सोऽमृतो मरणधर्मरहितः पुरुषो भातिः दीप्यतेइत्यक्षिरे वमर्थः ॥ १८ ॥

अथाध्यात्ममिदमेव शरीरमन्नमथ योऽयन्दक्षिणेऽक्षन्पुरुषः सोऽत्ता स एतस्मिन्नन्ने पश्रितो भाति ॥ १९ ॥

अथेति अध्यात्मं तु इदमेव शरीरमन्नं दक्षिणाक्षिपुरुषएव तातथा चान्ने शरीरे ऽपश्रितोऽमृतोऽक्षिपुरुषोऽत्ताभाति प्रकाशतइति॥

तस्मैतमग्निरित्यध्वर्य्यव उपासते यजुरित्येष हीदꣳ सर्व्वं युनक्ति सामे तिच्छन्दोगा एतस्मिन्हीदꣳ सर्वꣳ समानमुक्थमिति बह्वृचा एष हीदꣳ सर्व्वमुत्थापयति यातुरिति यातुविद एतेन हीदꣳ सर्व्वं

ध्यतँ विषमिति सर्पाः सर्पऽइति सर्वविद ऽऊर्गिति देवा रयिरिति मनुष्यामायेत्यसुराः स्वधेति पितरो देवजनऽइति देवजनविदो रूपमिति गन्धर्व्वा गन्धऽ इत्यप्सरसस्तं यथा-यथोपासते तदेव भवति तद्धैनान्भूत्वावति तस्मादेनमेवँवित्सर्व्वैरे वैतैरुपासीत सर्व्वं ह्वैतद्भवति सर्व्वं ह्वैनमेतद्भूत्वावति ॥ २० ॥

एवमधिदैवमध्यात्मं च यः पुरुषः परमात्माध्येयत्वेनोक्तस्तस्य प्रशंसार्थं नानारूपैरुपासनं दर्शयति तमेतमिति यः पुरुषः उक्तः स परमात्मेति सर्वं च व्याख्येयः "अतएवैतरे एकैवमध्यात्ममधिदैवं चैकं परमात्मानं प्रस्तुत्य समाम्नातं एतं ह्येते बह्वचामहदुक्थमीमां-संतरामग्नावध्वर्यवएतं महाव्रते "छन्दोगा तमस्यामंतं दिव्येतं वायवे तमाकाशइति प्रक्रम्य सर्वेषु भूतेष्वेतमेव ब्रह्मेत्याचक्षतइति" तत्रा-ध्वर्यवो याजुषा एतं पुरुषमग्निरिष्टकाचयनेन निष्पादितोऽग्नि-रित्युपासते यजुरिति च यजुःशब्दस्य परमात्मपरतां दर्शयति एष हीदं सर्वं युनक्तीति एषः पुरुषइदं सर्वं जगत् युनक्ति सर्वं च स्वयं मतइति अनेन सर्वव्यापकत्वमुक्तं छन्दोगाः सामवेदिनः सामेत्यु-पासते सामशब्दस्य परमात्मपरता निर्वक्ति एतस्मिन्हीदमिति एत-स्मिन्परमात्मनि कारणे इदं सर्वं कार्यजातं समानं समानमिति सामशब्दनिष्पत्तिः बह्व्यो ऋचो येषां ते बह्वृचा ऋग्वेदिनमित्यु-

पासते एष इदं सर्वमुत्थापयति जनयतीति उक्थशब्देन परमात्मोच्यते इत्यर्थः 'उत्पूर्वात्तिष्ठतेः कप्रत्यये तकारस्य ककार श्छांदसः'इति उक्थशब्दव्युत्पत्तिः, यातुविदो यातुधाना यातुरित्युपासते एतेन इदं सर्वं यतंनियतं स्वस्वस्थानमनतिलंघ्य स्थापितं वर्त्ततइति यातुशब्दः पुरुषवाचकः सर्पाः विषमित्युपासते स्वोपजोव्यत्वाद्विषस्योपासनं एवमुत्तरत्र सर्पविद अहितुंडिकाः दुर्गमं रयिर्धनं मायांतर्द्धानादिका, स्वधापितृभ्यो देयमन्नं, देवजनविदः किन्न स्वधादेवजनइति रूपं, नागादिकौशलं गन्धः स्रगादिभोगः, सर्वे स्वोपजीव्यत्वे सति पुरुषमेवोपासते इति तात्पर्यसंग्रहेणाह यथा यथोपासते तदेव भवतीति त परमात्मानं यथा येन रूपेण उत येन प्रकारेण वा उपासते स तदेवैतत्स्वरूपो भवतीति यदुक्तं पूर्वमुपास्यरूपं तं भूत्वा एनानुपासकानवति तस्मादेवं वित्पुरुषः सर्वरूपो भूत्वा जगदवतीति जानतः एतैः सर्वैः पूर्वोक्तैरूपैरग्न्यादिकैरेनं पुरुषमुपासीत् स पुरुषः सर्वमेतदग्न्यादिकं भवति सर्वमेतद्भूत्वा एनमुपासकं भवति ॥ २० ॥

स॒ऽ ए॒ष त्री॒ष्टकोऽग्नि॥ ऋ॑गे॒का य॒जुरे॒का समै॒का

तद्याङ्कांस्त्वा॒ऽर्चोपद॒धाति रुक्म ऽएव त॒स्या

ऽआय॒तनम॒थ यां य॒जुषा पु॒रुषऽ एव त॒स्याऽ

आय॒तनम॒थ यां॒ सा॒म्ना पुष्करपर्णमेव

त॒स्या आय॒तनमेव॒ त्रीष्टकाः॥ २१ ॥

यदुक्तं सर्वस्मिन्ब्राह्मणे एतस्याग्नेर्वास्मिन् ब्राह्मणे एतस्याग्नेः वागेवोपनिषदिति प्रक्रम्य सा वा एषा वाक्त्रेधा विहिता ऋचो यजूꣳषि सामानि तेनाग्निस्त्रेधा विहितस्तेन हि त्रयेण चीयत इति तत्र सूर्यमण्डलार्चिः पुरुषरूपत्वमेव ऋचः अर्चिसामानि पुरुषो यजूंषीति अथैषामधियज्ञमेवमुक्तं "यदेतन्मण्डलं तपत्ययꣳ सरुः क्मोऽथ यदेतदर्चिर्दीप्यतऽइदं तत्पुष्करपर्णमथ यऽएषऽ एतस्मिन्मण्डले पुरुषोऽयमेव स योऽयं हिरण्मयः पुरुष इति तत्सर्वं पर्यालोच्याह सएषत्र्यिष्टकोऽग्निरिति एष चित्याग्निस्त्रीष्टकः त्रिसंख्याकेष्टकः तदेवेष्टकादर्शयति ऋगेका यजुरेका सामैकेति तद्यां काञ्चाग्नावुपदधातीत्यादिरयमर्थः अत्राग्नौ यं कामिष्टकां ऋचा ऋङ्मन्त्रेणोपदधाति सा ऋगिष्टकासाध्यसाधनयोरभेदोपचारादेवमुक्तं तस्य रुक्मएवायतनं ऋगात्मकं मण्डलमेवाधियज्ञे रुक्मइत्युक्तं यां यामिष्टकां यजुर्मन्त्रेणोपदध्यात्सा यजुरिष्टका तस्याः पुरुषएवायतनं मण्डलाधिष्टातुः पुरुषस्याधियज्ञं हिरण्मयपुरुषत्वमुक्तं अथयामिष्टकां साम्नोपदध्यात्सामेष्टका तस्याः पुष्करपर्णमेवायतनं सामात्मकार्चिषोधियज्ञपुष्करपर्णात्मत्वमुक्तं एवं ऋगादिभेदेन त्र्यिष्टकोग्न्याख्यो यज्ञः ॥ २१ ॥

ते वाऽ एतेऽ उभेऽ एष च रुक्मऽ एतच्च पुष्करपर्णꣳ मेतं पुरुषमपीत ऽउभे ह्यृक्साम्ने यजुरपीतऽ एवम्वेकेष्टकः ॥ २२ ॥

एकेष्टकत्वं सम्पादयितुमाह ते वा एते उभेइति एष रुक्मएतत्पुष्करपर्णं एते उभे एतं पुरुषमपीतः प्राप्नुतस्तदाधारे भव तदत्ययं

ऋक्सामे उभे यजुः अपीतः यजुरधीनेस्तः एवं उ एवमेवैकेष्टकः रुक्मपुष्करपर्णयोः पुरुषाधारत्वे ऋक्सामयोश्च यजुरधीनत्वं तस्मादेकेष्टकोऽग्निरित्यर्थः ॥ २२ ॥

सऽ एषऽ एव मृत्युर्यऽ एषऽ एतस्मिन्मण्डले पुरुषो यश्चायन्दक्षिणेऽक्षन्पुरुषः सऽ एष ऽएवं विद आत्मा भवति स य एवं विदस्माल्लोकात्प्रैत्यथैतमेवात्मानमभिसम्भवति सोऽमृतो भवति मृत्युर्ह्यस्यात्मा भवति ॥ २३ ॥

स एषऽ एव मृत्युरित्यादिना वेदितुः फलवर्णनं य एतस्मिन्मण्डले पुरुषो यश्च दक्षिणेऽक्षे स एष मृत्युः स च एवं विदो नरस्यात्मा भवति स एवं विदस्माल्लोकात्प्रैति म्रियते यदैतमेवात्मानमभि सम्भवति प्राप्नोति अमृतश्च भवति हि यतो मृत्युरस्यात्मा भवति स एषोऽग्निर्यजुरात्मकोऽधियज्ञं अधिदैवं मण्डलमध्यवर्ती अध्यात्मं दक्षिणाक्षिवर्ती पुरुषो मृत्युरूपः तमात्मत्वेन विद्वानस्माल्लोकात्प्रयत्नेन वाऽमृतो भवतीत्यर्थः ॥ २३ ॥

इति श्रीसायनाचार्यविरचिते माधवीये वेदार्थप्रकाशमाध्यन्दिनीये शतपथब्राह्मणे दशमकाण्डे अग्निरहस्ये तृतीयप्रपाठके चतुर्थब्राह्मणस्य भाष्यं समाप्तम् ।

इदानीं याज्ञवल्कीयबृहदारण्यकाण्डप्रवर्त्तकगुरुशिष्यपरम्परा कथनाय वंशप्रतिपादकं कण्डिकैकादशकं समारभ्यते तत्र प्रथमान्तः शिष्यः पञ्चम्यन्तो गुरुरिति ।

अथ वंशः समानमासाज्जीवी प्रचात्साञ्जीवी पुत्रो मांडूकायने र्मांडूकायनेर्माण्डूकायनि-र्माण्डव्य न्माण्डव्यः कौत्सात्कौत्सो माहित्थे-र्माहित्थिर्वामकक्षायणाद्वामकक्षायणो वात्स्याद्वात्स्यः शाण्डिल्याच्छाण्डिल्यः कुश्रेः कुश्रिर्यज्ञ वचसो राजस्तम्बायनाद्यज्ञ वचा राजस्तम्बायनस्तुरात्कावषेयात्तुरः कावषेयः प्रजापतेः प्रजापतिर्ब्रह्मणो ब्रह्म स्वयम्भु ब्रह्मणे नमः ॥ १ ॥

अथ वंशः तदिदं वयं शौर्पणाय्यात्शौर्पणाय्यो गौतमाद्गौतमो वात्स्याद्वात्स्यो वात्स्याच्च पाराशर्य्याच्च पाराशर्य्यः सांकृत्याच्च भारद्वाजाच्च भारद्वाजऽऔदवाहेश्च शाण्डिल्याच्च शाण्डिल्यो बैजवापाच्च गौतमाच्च गौतमो बैजवापायनाच्च वैष्टपुरेयाच्च वैष्टपुरेयः शाण्डिल्याच्च रौहिणायनाच्च रौहिणायनः शौनकाच्चात्रेयाच्च रैभ्याच्च रैभ्यः पौतिमाष्याय णाच्च कौण्डिन्यायनाच्च कौण्डिन्यायनः

कौण्डिन्यात्कौण्डिन्य: कौण्डिन्यात्कौण्डिन्य:
कौण्डिन्याच्चाग्निवेश्याच्च ॥ २ ॥
आग्निवेश्य: सैतवात्सैतव: पाराशर्यात्पा-
राशर्यो जातूकर्ण्याज्जातूकर्ण्यो भारद्वाजा
द्भारद्वाजो वैजवापायनाद्वैजवापायन:
कौशिकायने: कौशिकायनिर्घृतकौशि-
काद्घृतकौशिक: पाराशर्यायणात्पा-
राशर्यायण: पाराशर्यात्पाराशर्यो जातूक-
र्ण्याज्जातूकर्ण्यो भारद्वाजाद्भारद्वाजो
भारद्वाजाच्चासुरायणाच्च यास्काच्चासुरायण-
स्त्रैवणेस्त्रैवणिरौपजन्धनेरौपजन्धनिरासुरे-
रासुरिर्भारद्वाजाद्भारद्वाजऽआत्रेयात् ॥ ३ ॥
आत्रेयो माण्टेर्माण्टिर्गौतमाद्गौतमो गौतमाद्गौतमो
वात्स्याद्वात्स्य: शाण्डिल्याच्छाण्डिल्य:
कैशोर्य्यात्काप्यात्कैशोर्य्य: काप्य: कुमारहा-
रितात्कुमारहारितो गालवाद्गालवो विदर्भी
कौण्डिन्याद्विदर्भी कौण्डिन्यो वत्सनपातो
बाभ्रवाद्वत्सनपाद्बाभ्रव: पथ: सौभरात्पन्था:
सौभरो यास्यादाङ्गिरसऽआभूतेस्त्वा-

ष्ट्राद्दाभूतिस्त्वाष्ट्रो विश्वरूपात्त्वाष्ट्राद्विश्व-
रूपस्त्वाष्ट्रोऽश्विभ्यामश्विनौ दधीचऽआथर्व-
णाद्दध्यङ्ङाथर्वणोऽथर्वणो दैवादथर्वा दैवो मृ-
त्योः प्राध्वꣳ॰ सनान्मृत्युः प्राध्वꣳ॰ सनः
प्रध्वꣳ॰ सनात्प्रध्वꣳ॰ सनऽएकर्षेरेकर्षिर्वि-
प्रचित्तेर्विप्रचित्तिर्व्यष्टेर्व्यष्टिः सनारोः
सनारुः सनातनात्सनातनः सनगात्सनगः
परमेष्ठिनः परमेष्ठी ब्रह्मणो ब्रह्म स्वयम्भु
ब्रह्मणे नमः ॥ ४ ॥

अथ वꣳ॰ शस्तदिदं वयꣳ॰ शौर्पणाय्याच्छौर्पणाय्यो
गौतमाद्गौतमो वात्स्याद्वात्स्यो वात्स्याच्च पारा-
शर्याच्च पाराशर्यः सांकृत्याच्च भारद्वाजाच्च
भारद्वाजऽऔद्वाहेश्च शाण्डिल्याच्च शाण्डिल्यो
वैजवापाच्च गौतमाच्च गौतमो वैजवापायनाच्च
वैष्टपुरेयाच्च वैष्टपुरेयः शाण्डिल्याच्च रौहि-
णायनाच्च रौहिणायनः शौनकाच्च जैवन्ता-
यनाच्च रैभ्याच्च रैभ्यः पौतिमाष्यायणाच्च
कौण्डिन्यायनाच्च कौण्डिन्यायनः कौण्डि-

न्याभ्यां कौण्डिन्यावौर्णवाभेभ्य और्णवाभाः
कौण्डिन्यात्कौण्डिन्यः कौण्डिन्यात्कौण्डिन्यः
कौण्डिन्याच्चाग्निवेश्याच्च ॥ ५ ॥

आग्निवेश्यः सैतवात् सैतवः पाराशर्य्यात्पा-
राशर्य्यो जातूकर्ण्याज्जातूकर्ण्यो भारद्वाजाद्भार-
द्वाजो भारद्वाजाच्चासुरायणाच्च गौतमाच्च
गौतमो भारद्वाजाद्भारद्वाजो बलाकाकौ-
शिकाद्बलाकाकौशिकः काषायणात्काषा-
यणः सौकरायणात्सौकरायणस्त्रैवणेस्त्रैव-
णिरौपजन्धनेरौपजन्धनिः सायकायनात्सा-
यकायनः कौशिकायनेः कौशिकाय-
निर्घृतकौशिकाद्घृतकौशिकः पाराशर्य्यायणा-
त्पाराशर्य्यायणः पाराशर्य्यात्पाराशर्य्यो
जातूकर्ण्याज्जातूकर्ण्यो भारद्वाजाद्भारद्वाजो
भारद्वाजाच्चासुरायणाच्च यास्काच्चासुराय-
णस्त्रैवणेस्त्रैवणिरौपजन्धनेरौपजन्धनिरासु-
रेरासुरिर्भारद्वाजाद्भारद्वाज आत्रेयात् ॥ ६ ॥

आत्रेयो माण्टेर्माण्टिर्गौतमाद्गौतमो गौतमा-
द्गौतमो वात्स्याद्वात्स्यः शाण्डिल्याच्छाण्डिल्यः

कैशोर्यात्काप्यात्कैशोर्यः काप्यः कुमारहा-
रितात्कुमारहारितो गालवाद्गालवो विदर्भी
कौण्डिन्याद्विदर्भी कौण्डिन्यो वत्सनपातो
बाभ्रवाद्वत्सनपाद्बाभ्रवः पथः सौभरात्पन्थाः
सौभरोऽयास्यादाङ्गिरसादयास्य आङ्गिरस आ-
भूतेस्त्वाष्ट्रादाभूतिस्त्वाष्ट्रो विश्वरूपात्त्वाष्ट्राद्
विश्वरूपस्त्वाष्ट्रोऽश्विभ्यामश्विनौ दधीच आथ-
र्वणाद्दध्यङ्ङाथर्वणोऽथर्वणो दैवादथर्वा दैवो
मृत्योः प्राध्वꣳसनान्मृत्युः प्राध्वꣳसनः सना-
त्प्रध्वꣳसन एकर्षेरेकर्षिर्विप्रजित्तेर्विप्र-
जित्तिर्व्यष्टेर्व्यष्टिः सनारोः सनारुः सनात-
नात्सनातनः सनगात्सनगः परमेष्ठिनः
परमेष्ठी ब्रह्मणो ब्रह्म स्वयम्भु ब्रह्मणे नमः॥३॥
अथ वꣳशस्तदिदं वयं भारद्वाजीपुत्राद्भा-
रद्वाजीपुत्रो वात्सीमाण्डवीपुत्राद्वात्सीमाण्ड-
वीपुत्रः पाराशरीपुत्रात्पाराशरीपुत्रो गार्गीपु-
त्राद्गार्गीपुत्रो गार्गीपुत्राद्गार्गीपुत्रः पाराशरी-
कौण्डिनीपुत्रात्पाराशरीकौण्डिनीपुत्रो गार्गी-

पुत्राद्गार्गी पुत्रो गार्गीपुत्राद्गार्गी पुत्रो बाडेयी
पुत्राद्बाडेयोपुत्रो मौषिकी पुत्रान्मौषिकीपुत्रो
हारीकर्णी पुत्राद्धारिकर्णी पुत्रो भारद्वाजी
पुत्राद्भारद्वाजी पुत्रः पैङ्गी पुत्रात्पैङ्गी पुत्रः
शौनकीपुत्राच्छौनकीपुत्रः ॥ ८ ॥
काश्यपी बालाक्यामाठरी पुत्रात्काश्यपी
बालाक्यामाठरीपुत्रः कौत्सी पुत्रात्कौत्सी
पुत्रो बौधी पुत्राद्बौधी पुत्रः शालङ्कायनी पुत्रा-
च्छालङ्कायनीपुत्रो वार्षगणीपुत्राद्वार्षगणी पुत्रो
गौतमी पुत्राद्गौतमी पुत्रऽ आत्रेयी पुत्रा दात्रे-
यी पुत्रो गौतमी पुत्राद्गौतमी पुत्रो वात्सीपु-
त्राद्वात्सी पुत्रो भारद्वाजी पुत्राद्भारद्वाजी पुत्रः
पाराशरी पुत्रात्पाराशरीपुत्रो वार्कारुणीपु-
त्राद्वार्कारुणी पुत्रऽ आर्त्तभागी पुत्रादार्त्तभा-
गी पुत्रः शौंगीपुत्राच्छौंगी पुत्रः सांकृती पु-
त्रात्सांकृतीपुत्रः ॥ ९ ॥

श्रालम्बी पुत्रादालम्बी पुत्रऽ श्रालम्बायनी पुत्रादालम्बायनी पुत्रो जायन्ती पुत्राज्जायन्ती-पुत्रो मांडूकायनी पुत्रान्मांडूकायनी पुत्रो मांडूकी पुत्रान्मांडूकी पुत्र(: शांडिली पुत्राच्छांडिली पुत्रो राथीतरी पुत्राद्राथीतरी पुत्र(: क्रौञ्चिकीपुत्राभ्यां क्रौञ्चिकी पुत्रौवै दभ्रती. पुत्राद्वै दभ्रतो पुत्रो भालुकी पुत्राद्भालुकीपुत्र(: प्राचीनयोगी पुत्रात्प्राचीनयोगीपुत्र:) सांजीवी पुत्रात्सांजीवी पुत्र:: कार्शकेयी पुत्रात्कार्शकेयीपुत्र: ॥ १० ॥

प्राश्नी पुत्रादासुरिवासिन(: प्राश्नी पुत्रऽ आसुरायणादासुरायणऽ आसुरेरासुरिर्याज्ञवल्क्याद्याज्ञवल्क्यऽउद्दालकादुद्दालकोऽरुणादरुणाऽउपवेशेरुपवेशि(: कुश्रेः कुश्रिर्वाजश्रवसो-वाजश्रवाज्जिह्वावतो बाध्योगाज्जिह्वावान् बाध्योगोऽसितादार्षगणादसितो वार्षगणो हरितात्कश्यपाद्धरित(: कश्यप(: शिल्पात्कश्य-

पा॒च्चि॑त्य॒ः क॑श्य॒पः क॑श्य॒पान्नै॑ध्रु॒वेः क॑श्य॒पो नैध्रुवि॒र्वा॒चो वा॒गम्भि॒णया॑ऽअम्भि॒ण्या॑दित्या॒दादित्या॑नी॒मा॑नि शुक्ला॑नि य॒जूंषि वाज॑सनेये॒न या॑ज्ञवल्क्ये॒नाख्या॑यन्ते ॥ ११ ॥

वंशोक्ताऋषयस्तृप्यन्ताम् ॥ श्रीः ॥

श्रीवेदपुरुषार्पणमस्तु

आदित्येन सूर्येण प्रोक्तत्वादादित्यानि वाजिशाखावच्छिन्नानां यजुषां सूर्येणोपदिष्टत्वं याज्ञवल्क्येन प्राप्तत्वं च पुराणेषु प्रसिद्धम् यद्वा आदित्यात्मत्वादादित्यानीति निरुपरितोऽत्यर्थः आदित्यो हि वेदात्मा हिरण्यगर्भः प्रसिद्धः तत एव हिरण्यगर्भः प्रसिद्धः तत एव हिरण्यगर्भात्सम्प्रदायोक्ततदादिकान्सर्वानेव प्रतिपारपर्येणागतोऽयं सम्प्रदाय इति युक्तं यजुषामादित्वम् कथम्भूतानि यजूंषि शुक्लानि शुद्धानि यद्वा ब्राह्मणेन मिश्रितमन्त्रात्मकानि इति ॥

सँवत् १९४८ ज्येष्ठमासे शुभे शुक्ले तृतीयायां समाप्तम् शुभम् ।

॥ विज्ञापनम् ॥

इह वाराणस्यादिपुण्यभूमिष्ठानां ब्राह्मणादीनामपि स्नानसन्ध्यातर्पणश्राद्धव्रतरुद्रिग्रगर्भाधानादिसंस्कारस्न्त्रार्थाभिज्ञानां सरलोपायेन मन्त्रार्थपर्यालोचनाय मिथिलामण्डलान्तर्गतसुगौनाग्रामाधिपतिमहाराजधर्म्मचन्द्रसिंहाज्ञप्तेन महामहोपाध्यायश्रीशत्रुघ्नशर्मणा सङ्गृहीतेयं मन्त्रार्थदीपिका ॥ सन्ति चान्ये उवटमहीधरब्राह्मणसर्वस्वाद्यनेकग्रन्थाः परन्तु तेषां बहुकालपरिश्रमसाध्यानां दुरूहार्थानां सम्यक्तया विचारासम्भावनया च स्वल्पज्ञानविशिष्टानां जनानामल्पायासेन महाफलावाप्तये काशिकराजकीयप्रधानपाठशालाध्यक्षडाक्टरतीवो साहब महाशयानुमत्या लोकोपकाराय, काशीस्थसुप्रसिद्धब्रह्मामृतवर्षिणीसभ्यविद्वत्सम्मत्याऽविमुक्तपुरीवास्तव्येन राजकीयसंस्कृतप्रधानपाठालयाधीतविद्येन मिथिलामण्डलेश्वरेतो लब्धवैदुष्यप्रतिष्ठेन साङ्गशुक्लयजुर्वेदान्तर्गतमाध्यन्दिनशाखीय वेदविद्यालयाध्यापकेन पाठकोपाह्वश्रीयुगलकिशोरशर्म्मणा पुस्तकत्रयमवलोक्य पाठान्तरं विलिख्य च ग्रन्थकर्त्तृव्याख्यातमन्त्रब्राह्मणयोरर्थाविशेषञ्चोपनिबध्य संशोध्य भारतजीवनाख्ययन्त्रालये श्रीबाबू कमलेश्वरसिंहशर्मणो द्रव्यव्ययेन प्रथमवारं ममाज्ञया प्रकाशिता तामेनामवेक्ष्य कृतार्थयितव्या चन्तव्यप्रसादज्जैनाश्च भवेयमिति भृगमभ्यर्थये ॥ सं० १९४८

